UGC - CARE LISTED

ISSN: 0974 - 8946

अनुसन्धान-प्रकाशन-विभागीया त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

(A Refereed & Peer-Reviewed Quarterly Research Journal)

46 वर्षे प्रथमोऽङ्कः ( जनवरीमासाङ्कः ) 2021

प्रधानसम्पादकः
प्रो.मुरलीमनोहरपाठकः
कुलपतिः

सम्पादकः
प्रो.शिवशङ्करमिश्रः

सहसम्पादकः
डॉ.ज्ञानधरपाठकः

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविश्वविद्यालयः
केन्द्रीयविश्वविद्यालयः
नवदेहली-16

UGC- CARE Listed ISSN : 0974-8946

अनुसन्धान-प्रकाशन-विभागीया त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

**(A REFEREED & PEER- REVIEWED QUATERLY RESEARCH JOURNAL)**

46 वर्षे प्रथमोऽङ्कः ( जनवरीमासाङ्कः ) 2021 ई.



**श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविश्वविद्यालयः**

नवदेहली-110016

प्रकाशकः
**श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविश्वविद्यालयः**
बी-4, कुतुब इन्स्टीट्यूशनल एरिया, नवदेहली-110016



**ISSN :- 0974 - 8946**

46 वर्षे प्रथमोऽङ्कः (जनवरीमासाङ्कः) 2021 ई.

बेवसाइटसङ्केतः - www.slbsrsv.ac.in
ई-मेलसङ्केतः - shodhaprabhalbs@gmail.com
दूरभाषसङ्केतः - 011-46060609, 46060502

सूचनाः- शोधपत्रलेखकैः स्वशोधपत्रे दूरभाषाङ्काः अवश्यं लेखनीयाः

मुद्रकः - गणेशप्रिंटिंगप्रेसः, कटवारियासरायः, नवदेहली-16

प्रधानसम्पादकः

**प्रो. मुरलीमनोहरपाठकः**

कुलपतिः

* * * * *

सम्पादकः

**प्रो. शिवशङ्करमिश्रः**

शोधविभागाध्यक्षः

* * * * *

सम्पादकमण्डलम्

**प्रो. जयकान्तसिंहशर्मा**

**प्रो. हरेरामत्रिपाठी**

**प्रो. भागीरथिनन्दः**

* * * * *

सहसम्पादकः

**डॉ. ज्ञानधरपाठकः**

शोधसहायकः

* * * * *

मुद्रणसहायकः

**डॉ. जीवनकुमारभट्टराई**

# शोधप्रभा

## श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविश्वविद्यालयस्य

## अनुसन्धान-प्रकाशन-विभागीया शोध-पत्रिका

- एषा त्रैमासिकी शोध-पत्रिका।
- अस्याः प्रकाशनं प्रतिवर्षं जनवरी-अप्रैल-जुलाई-अक्टूबरमासेषु भवति।
- अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धान-प्रवृत्तेरुद्बोधनं प्रोत्साहनं विविधदृष्ट्याऽनुसन्धेयविषयाणां प्रकाशनं च विद्यते।
- अस्यां श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविश्वविद्यालयस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाननिबन्धाः प्रकाश्यन्ते।
- अप्रकाशितानां दुर्लभानां प्राचीनाचार्यरचितानां लघुग्रन्थानां सम्पादनभावानुवादटीका-टिप्पण्यादिपुरस्सरं प्रकाशनमप्यस्यां क्रियते।
- शोधपत्रलेखकाः शोधपत्रस्यान्ते पत्राचारसङ्केतः दूरभाषसंख्या, ईमेलसङ्केतश्च अवश्यं लेखनीयाः।
- पत्रिकायाः एका प्रतिः लेखकाय निःशुल्कं दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।
- अस्यां पत्रिकायां विशिष्टानां संस्कृत-हिन्द्याङ्ग्ल-ग्रन्थानां समालोचना अपि प्रकाश्यन्ते। आलोच्यग्रन्थस्यालोचना यस्मिन्नङ्के प्रकाशिता भवति सोऽङ्को ग्रन्थकर्त्रे निःशुल्कं दीयते किञ्च समालोचनापत्राण्यपि यथासौविध्यं दीयन्ते। प्रकाशित-शोधसामग्री लेखकस्यास्ति अतः लेखस्य मौलिकतादिविषये सम्पूर्णं दायित्वं लेखकस्य भविष्यति न तु सम्पादकस्य न वा प्रकाशकस्य।
- पत्रिकासम्बद्धन्यायालयीयविवादविषये दिल्लीन्यायालयक्षेत्रमेव परिसीमितमस्ति।
- अस्या एकाङ्कस्य मूल्यम् रु. 125.00, वार्षिकसदस्यताराशिः रु. 500.00 पञ्चवार्षिकसदस्यताराशिः रु. 2000.00, आजीवनसदस्यताराशिः रु. 5000.00
- सदस्यताराशिः **कुलसचिव, श्रीलाल बहादुर शास्त्री राष्ट्रिय संस्कृत विश्वविद्यालय,** नई दिल्ली-16, इति सङ्केतेन (बैंकड्राफ्ट अथवा मनीआर्डर) द्वारा प्रेषणीयः वा ई-बैंकमाध्यमेन देयः।
- पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः **'सम्पादक' शोध-प्रभा'**
**श्रीलाल बहादुर शास्त्री राष्ट्रिय संस्कृत विश्वविद्यालय (केन्द्रीय विश्वविद्यालय), कटवारिया सराय,नई दिल्ली- 110016** इति सङ्केतेन विधेयः।

**सम्पादकः**

## नैवेद्यम्

संस्कृतं नाम चैतन्याधायकं किमप्यपूर्वं वस्तु, जीवनस्पन्दनञ्चास्मत्संस्कृतेः मानवतायाश्च, तपश्चरणफलं पूर्वजानाम्, सर्वथा संरक्ष्यो दायादश्च भाग्योत्कर्षासादितः, सुकृतपरिपाकश्चास्माकम्। यच्च न केवलं सूतेऽचिन्त्यं महत्फलमपितु स्थापयत्याचारे, प्रयोजयति पुरुषार्थेषु च। यस्य संरक्षणेन, संवर्द्धनेन च परिस्फुरति श्रीः सर्वस्या अपि संसृतेः, विरुद्धानामपि समञ्जसं समन्वयनं यस्यानुपमं सौन्दर्यम्। इत्थमवसितेऽपि नूनं शिष्यते बहुविधेयमेतदीयम्, न केवलं स्तुत्या संभवत्यस्यालङ्करणमपितु सौरभविकिरणेन, कर्मतया परिणत्या च। न तोष्टव्यं केवलमाहितकर्मसम्पत्त्या, अपित्वेष्टव्यमार्षप्रज्ञा प्रसूतशास्त्रसंरक्षणम्।

अपूर्व एव महिमा शास्त्राणामाविर्भूततत्प्रकाशानां तेषां महर्षीणाम्। स्वशरीरं तृणाय मन्यमानैः तपः-स्वाध्यायनिरतैर्यैर्महात्मभिः स्वानुभूतिमहिम्ना समधिगतं नित्यनिरवद्यं मातापितृसहस्रेभ्योऽपि वत्सलतरमतिसम्पन्नं शास्त्रजातमतिरिच्य किं वा स्यात्स्वकीयं स्वरूपावेदकं वा तत्त्वमिति बहुधा चिन्तयामि। महच्चित्रमिदं स्थाने न यथावन्निरूप्यते शास्त्रसम्पत्, नेदानीमपि पूर्णतया परीक्ष्यते व्युत्पत्तिपाटवं, न च प्रतीक्ष्यते शास्त्रानुगतत्वम्। इदमपि विस्मयकरं यन्न समाराध्यते कश्चिदपि ग्रन्थ आमूलमिति नाधिगम्यते शास्त्रस्य व्यवस्थितं रूपं प्रतिपित्सितं वाञ्जसा। शास्त्राभिरुचिग्रहणे प्रतिबन्धकं भवति स्वरूपसंस्कारवैकल्यमन्तेवासिनाम्, स्वच्छदर्पण इवाविकलं प्रतिफलति गुरूणां प्रतिभा। शिष्या- योग्यताप्रमादनियमित आचार्यगतो ग्रन्थग्रन्थिविस्फोरणक्षमोऽपि प्रज्ञाप्रवाहो न मुक्तं विहरति शास्त्राङ्गणे।

इदमतिरोहितमेव विदुषां यदस्मद्विश्वविद्यालयः शास्त्रसंरक्षणदिशि कश्चित्क्रमं प्रवर्तयन्निव सर्वदा बोभवतीति तद्विधावेवेयं **शोधप्रभा** स्वलक्ष्यमाकलय्यानुदिनं समेधमाना शास्त्रचैतन्यं विकिरन्ती समुल्लसति। तस्या एवाङ्कविशेषः सम्प्रति स्वाहितनिबन्धगौरवेन भवत्पाणिपल्लवपुटमुपेत्योत्स्मयमाना विलसति। अतः शोधप्रकाशनविभागाय धन्यवादं वितन्वन् पाठकानां शं समीहे।

**प्रो. मुरलीमनोहरपाठकः**
कुलपतिः

# सम्पादकीयम्

समस्तेऽपि जगति मानवानां परस्परं व्यवहारसम्पादनाय, परस्परं भावावबोधनाय, स्वीयविचारसम्प्रेषणाय च मानवैः यत् साधनं विनिर्मितं तद्भाषापदेन व्यपदिश्यते लोके। अनया भाषया एव जनैः स्वसुख-दुःख-हर्ष-विषादप्रभृतिचित्तभावानां परस्मै प्रकाशनं क्रियते। यद्यपि विश्वेऽस्मिन् सन्ति बह्व्यः भाषाः याभिः जनाः स्वकीयं जीवनं व्यवहरन्ति तथापि तासु तादृशं सामर्थ्यं, तादृशी व्यापकता, वैज्ञानिकता च नावलोक्यते यथा विराजते अस्माकं संस्कृतभाषायाम्। अस्याः भाषायाः वैज्ञानिकता, सरलता, सरसता, मधुरता, व्यापकता, सर्वभाषाजनकता च पदे-पद भाषाविद्भिः प्रतिपादिता भूरिशः प्रशंसिता च। संस्कृतभाषायाः एतद्वैभवं विलोक्य न केवलमस्माकं पूर्वजाः नतमस्तका अपितु वैदेशिका अपि अभिभूताः विलोक्यन्ते। अनेके पाश्चात्यकोविदः संस्कृतभाषायां व्याकरण-दर्शन- काव्यविषयमवलम्ब्य नैकग्रन्थाः प्रणीतवन्तः। वैदेशिकैः न केवलं ग्रन्थलेखनं कृतम् अपितु टीकाकार्यम्, अनुवादकार्यम्, समीक्षाकार्यम्, व्याख्याकार्यम्, सम्पादनकार्यञ्च विहितम्। न केवलमेतावदेव अपितु वेदोपनिषद्गीता-रामायण-महाभारत-व्याकरण-काव्य-दर्शनविषयेऽपि पाश्चात्य-चिन्तकैः सश्रद्धं लेखनं सम्पादनञ्च विहितम्। वैदेशिकाः संस्कृतं प्रति अतीवसमुत्सुकाः श्रद्धावन्तश्च दृश्यन्ते। संस्कृतं प्रति तेषां श्रद्धाविषये विल्सनमहोदयानां अनुष्टुपछन्देन विरचितमधोलिखितं पद्यद्वयं सर्वथा प्रमाणभूतम्। अनयोः पद्ययोः भावं संस्मरन् देवभाषा संस्कृतं प्रति हृदयेन नितान्तं गौरवमनुभवामि-

**यावद् गङ्गा च गोदा च यावद्विन्ध्यहिमाचलौ।**
**यावद् भारतवर्षं स्याद् तावदेव हि संस्कृतम्॥**
**न जाने विद्यते किं तद् माधुर्यमत्र संस्कृते।**
**सर्वदैव समुन्मत्ता येन वैदेशिका वयम्।**

46 वर्षे अङ्केस्मिन् विविधविषयविश्लेषणपराः पञ्चदशलेखाः प्रकाश्यन्ते। एवं प्रतिभाविशेषोद्भासितशोधपूर्णा संस्कृतसौरभं वितन्वतीयं विदुषां सन्तोषाय भविष्यतीति कामयमानोहं प्रमादादज्ञानाद्वा सञ्जातस्य दोषजातस्य प्रशमनार्थं निर्देशादिप्रदानैश्च उत्साहश्रियः संवर्धनार्थमभ्यर्थते सुमनसः विदुषः।

**प्रो.शिवशङ्करमिश्रः**
**शोधविभागाध्यक्षः**

# विषयानुक्रमणिका

## संस्कृतविभागः

## हिन्दी विभाग



## English Section

UGC- CARE Listed
जनवरी-मार्च, 2021

शोधप्रभा
वर्ष : 46, प्रथमोऽङ्कः

# यदागमेत्यादिपरिभाषार्थविमर्शः

प्रो. रामनारायणद्विवेदी *

सर्वस्यापि पदार्थस्य कश्चन संस्कारोऽपेक्ष्यते। मृत्तिका दण्डचक्रचीवरादिभिः संस्कृता सती घटस्वरूपं भजते। सुवर्णादिकमपि कुण्डलाद्याभूषणरूपतां समाप्नोति। इत्थं पदार्थाः यथा संस्क्रियन्ते तथैव बुद्ध्यादेरपि संस्कारः परमावश्यकः। तथा चाह हरिः-

**कायवाग्बुद्धिविषया ये मलाः समवस्थिताः।**
**चिकित्सालक्षणाध्यात्मशास्त्रैस्तेषां विशुद्धयः।।**[1] इति

यथा चिकत्साशास्त्रं शरीरमलान्यपाकुर्वत् जनानुपकरोति, व्याकरणमपि बौद्धं मालिन्यमपहरति। अतो हेतो यथार्थतो व्याकरणज्ञानं नितान्तमपेक्षितम्। तत्र भवद्भिः स्वाध्यायसततनिरतैस्समाधिसमाहितस्वान्तैः पाणिनिमुनिभिः शब्दानुशासनमष्टाध्यायी नामकं ग्रन्थरत्नं प्रणिन्ये। तत्र च वार्तिकानि महर्षेः कात्यायनस्य महाभाष्यं च श्रीपतञ्जलेः किमपि विशिष्टं स्थानं दधते। अष्टाध्याय्यां षड्विधानि सूत्राणि तेषु परिभाषासूत्रमन्यतमं भवति। यथा "इको यणची"[2] ति विधिसूत्रम् "तस्मिन्निति निर्दिष्टे पूर्वस्य"[3] इति परिभाषासूत्रम्। यत्र परिभाषोपस्कृतवाक्यार्थो विधिशास्त्रस्य भवति तदा विधिशास्त्रं लक्ष्यमुपकरोति।

परिभाषा अपि तथैव भवन्ति। परिभाषाश्चेमाः काश्चन भाष्यवार्तिककृद्भ्यां कण्ठरवेणोक्ताः, काश्चन ज्ञापकन्यायसिद्धाश्च सन्ति। भट्टनागेशः एतत्सर्वमेकत्रीकृत्य परिभाषेन्दुशेखरं प्रणिनाय।

तत्रैकादशी परिभाषा विधत्ते "यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते"[4] इति। कथमियं परिभाषोद्भाव्यते का चावश्यकताऽस्याः इति विचारयामः। परिभाषाया अवतरणं विदधता ग्रन्थकृतोल्लिखितम् "ननु प्रणिदापयतीत्यादौ दारूपस्य विधीयमाना

---

*आचार्यः, व्याकरणविभागे, काशीहिन्दूविश्वविद्यालयः, वाराणसी।

1. वाक्यपदीयम् १.१४७
2. अष्टाध्यायी ६.१.७७
3. अष्टाध्यायी १.१.६६
4. परिभाषेन्दुशेखरः ४

घुसंज्ञा दापेन स्यात्"[1] इति। अत्रायमाशयो वेदितव्यः अर्थवद्ग्रहणे नानर्थकस्येति कश्चन नियमः। एतन्नियमाङ्गीकारे च "स्वं रूपं शब्दस्याऽशब्दसंज्ञा"[2] इत्यनुशासनमेव मानम्। तथाहि स्वशब्देनात्मीयोऽर्थः समुपस्थाप्यते परमत्र शास्त्रे "अग्नेर्ढक्"[3] इत्यादिभिरर्थे कार्यस्यासम्भवात् तत्र शब्दस्यैव कार्यं भवति, उपस्थितश्चार्थस्तत्र विशेषणतयाऽन्वेति। अतोऽर्थविशिष्टस्यैव शब्दस्य कार्यं नानर्थकस्येति फलति। प्रणिदापयतीत्यत्र प्र. नि इत्युपसर्गद्वयपूर्वकात् दाधातोः णिचि पुक् भवति, अत्र नेर्गदनदेत्यादिना घुसंज्ञके परतः उपसर्गस्थान्निमित्तापरस्य नेर्नस्य णत्वं विधेयमस्ति। घुसंज्ञाविधायकं सूत्रम् "दाधाघ्वदाप्"[4] इत्यस्ति। अत्र दा, धा इत्यानुपूर्वीमुच्चार्य घुसंज्ञा विधीयेतेऽतः आनुपूर्व्यवच्छिन्न-विषयताप्रयोजकपदघटिते शास्त्रे अर्थवत्परिभाषा प्रवर्तते तथा च अर्थवत्छब्दस्य घुसंज्ञार्था दात्वावच्छिन्नस्य घुसंज्ञा वेद्या। अत्र त्वात्वाच्छिन्नमवर्थवत्तस्य घुसंज्ञा, अत्र यदात्वावच्छिन्नं तन्नार्थवत्, यच्चार्थवत् 'दाप्' इति तन्न दात्वावच्छिन्नमतोऽत्र घुसंज्ञाया अभावेन प्रणिदापयतीत्यत्र णत्वं न स्यादित्यवतरणाशयः। अत्रागमसमभिव्याहारे आगमविशिष्टस्यैवार्थवत्त्वमित्यत्र किं मानमिति चेदत्र भाष्यमेव मानम्। तथाहि भाष्ये "स्यासिच्सीयुट्तासिषु भावकर्मणोरूपदेशेज्झनग्रहदृशां वा चिण्वदिट् च"[5] इति सूत्रव्याख्यानावसरे "भावकर्मवाचिनि परतो ये स्यादयः इत्यर्थस्वीकारे सीयुडविशेषितः स्यादिति भाष्योक्तम् अर्थात् सीयुट् समभिव्याहारे तद्विशिष्टस्यैवार्थवत्त्वात् सीयुडागमविरहितस्याख्यातस्यार्थवत्त्वाभावेन सीयुडविशेषितः स्यादिति भाष्यकारस्याशयः। अतः आगमसमभिव्याहारे तद्विशिष्टस्यार्थवत्त्वमङ्गीकार्यं भाष्यप्रामाण्यात्। एतन्न्यायस्याङ्गीकारादेव अन्वत्र, रामाणाम्" इत्यत्र अनः, अल्लोपोऽनः इति लोपाभावश्च सिद्ध्यति।

अन्यथा न उ अन्विति न तत्पुरुषे कृते 'अनु' इत्यत्रोकारस्यार्थवत्त्वाभावेन निपातसंज्ञाया अभावेन "निपात एकाजनाङ्"[6] इत्यस्यात्राप्रवृत्तिः अत एवात्र यण् सिद्ध्यति। रामाणामित्यत्र यदि आगमविरहितस्यामः अर्थवत्त्वं यदि स्यात् तर्हि भसंज्ञां विधाय रामान् इति नान्ते "अल्लोपोऽनः"[7] इत्यस्य प्रवृत्तिः स्यात्।

न चैवमर्थस्वीकारे "भिन्द्युः" इत्यत्र दोषः स्यादिति वाच्यम् तथाहि "भिन्द् यास् उस्" इत्यत्र "उस्यपदान्तात्[8] इति पररूपं विधेयम्। सूत्रे उसित्यानुपूर्वी विद्यतेऽतः

1. परिभाषेन्दुशेखरे ११ अवतरणम्
2. अष्टाध्यायी १.१.६८
3. अष्टाध्यायी ४.२.३३
4. अष्टाध्यायी १.१.२०
5. अष्टाध्यायी ६.४.६२
6. अष्टाध्यायी १.१.१४
7. अष्टाध्यायी ६.४.१३४
8. अष्टाध्यायी ३.१.९६

आनुपूर्व्यवच्छिन्नविषयताप्रयोजकपदघटितत्त्वात् "अर्थवद्ग्रहणे नानर्थकस्य"[1] इति परिभाषात्रोपतिष्ठते। एवं चात्र यासुडागमसमभिव्याहरे तद्विहितस्योसः अर्थवत्त्वाभावात् पररूपानात्तिरिति वाच्यम्, निरुक्तप्रयोगसाधनायैव भाष्यकृता एतत्परिभाषायास्तत्राऽ-प्रवृत्तिरुक्ता, एवञ्चैतदपि भाष्यं निरुक्तार्थगमकमेवेति बोध्यम्।

किञ्चिदत्र विचार्यते समुदायः प्रत्येकानतिरिक्ते भवति। अतः दापि यथार्थवत्त्वं तर्हि तद् दाशब्देऽपि स्यादेव। अतो दाशब्दस्य घुसंज्ञायां सत्यामिष्टसिद्धौ प्रकृतावतरणा-सङ्गतिः। अर्थवत्त्वं नामार्थविषयकबोधजनकत्वप्रकारकतात्पर्यविशेष्यत्वं तच्च यथा दाप्शब्दे तथा दा इत्यत्रापीति चेदुच्यते यथावयवस्य समुदायभिन्नत्वमङ्गीक्रियते तथैव शाब्दिकैः समुदायस्याप्यवयवभिन्नत्वं स्वीक्रियते। अत्र च प्रमाणं समासग्रहणकृतनियमो ग्रहीतुं शक्यते तत्र हि "राजन् ङस् पुरुष सु" प्रत्ययान्ततदादित्वं नाङ्गीकृतं भाष्यकृता।

यद्यपि "राजन् ङस् इत्यस्य "पुरुष सु" इत्यनयोः प्रत्ययान्ततदादित्वेऽपि तत्समुदायस्य प्रत्यान्ततदादित्वाभावः अत एव चार्थवत्सूत्रेण सिद्धायां प्रातिपदिकसंज्ञायां पुनः समासग्रहणं नियमार्थमिति तत्र वर्णितम्। ये तावत् समुदायस्य प्रत्येकानतिरिक्तत्वमङ्गीकुर्वते तत्रापि समाधानं भूतिकृता प्रतिपादितम्। तथाहि-

"न चार्थविषयकबोधजनकत्वप्रकारकतात्पर्यविशेष्यत्वरूपार्थवत्त्वस्य दाब्वर्तिनो दाशब्दे कल्पनेऽपि प्रकृते तादृशविशेष्यत्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकधर्मवत्त्वरूपस्य अर्थवत्त्वस्य विविक्षितत्वेन तादृशधर्मश्च दाब्वृत्ति त्रित्वं न तु दावृत्ति द्वित्वं तस्य निरुक्तानुयोगितान्यूनवृत्तित्वात्, तथा च तस्य धर्मस्य दाशब्देऽभावान्नदोष इति वाच्यम् अवयवस्य समुदायभिन्नत्वस्वीकारेण अवयववृत्तिधर्मस्यापर्याप्त्यापि समुदायेऽसत्त्वात् तादृशतात्पर्य-विशेष्यत्वप्रतियोगिकपर्यादयनुयोगितावच्छेदकधर्मावच्छिन्नाऽनुयोकगताकपर्याप्ति प्रतियोगि-भूतदात्ववतो घुसंज्ञाविधाने न दात्वस्य तत्प्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकद्वित्वस्य वा दाप्शब्दे विना परिभाषां कथमप्यसम्भवेन घुसंज्ञार्थं परिभाषाया आवश्यकत्वाच्च"[2] इति। एवं पर्याप्तिनिवेशापि दोषवारणं निरूपितम्।

### अवतरणे दोषत्रयदानम्-

१. विषयोऽयं भूतिकृता प्रत्यपादि तदनुसारमत्र किञ्चिद् व्यातन्यते। व्याकरणे कार्यकालपक्षो यथोद्देशोपक्षश्चेति पक्षद्वयं विद्यते। उभयस्मिन्नपि पक्षेऽवतरणं न सम्भवति। तथाहि कार्यकालपक्षे पूर्वं धातुरूपसर्गेण युज्यते पश्चात् साधनेनेति भाष्यकथनात् पूर्वं धातुना सहोपसर्गयोगे घुसंज्ञादिकार्यं विधाय 'प्रणिदा' इति संसाध्य ततः णिजादिकं विधाय प्रणिदापयति इति रूपं सिद्धयति, एतदर्थं परिभाषाङ्गीकार नावश्यकः इति।

1. परिभाषेन्दुशेखरः १४
2. यदागमपरिभाषायां भूतितिलकव्याख्या

२. पूर्वं धातुः साधनेन युज्यत इत्यङ्गीकारेऽपि पुग्विधायकस्य "अर्तिह्रीब्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ"[1] इत्यस्य बहिरङ्ग तथा "दाधाघ्वदाप्"[2] इत्यस्य चान्तरङ्गत्वात् पूर्वं घुसंज्ञायां णत्वादिकार्ये सिद्धेऽवतरणमिदं नोचितम्। दाधाघ्वादाबित्यत्र केवलं 'दा' इत्यस्य ग्रहणं पुग्विधायके तु शास्त्रे णिचि परतः पुग्विधानात् परनिमित्तकत्वेन बहिरङ्गत्वम्, अपर- निमित्तकत्वाच्च घुसंज्ञाविधायकशास्त्रस्यान्तरङ्गत्वमतः सत्यां पूर्वं घुसंज्ञायां णत्वे चावतरणासङ्गतिरिति पूर्वपक्षाशयः।

३. यथोद्देशपक्षाङ्गीकारेऽपि प्रथमतः घुसंज्ञायाः सत्त्वेन ततो जतिघुसंज्ञामादाय णत्वं सेत्स्यतीत्ववतरणं कस्मिंश्चिदपि पक्षे नोचितम्।

**समाधानम्-**

अत्र चैवं समाधिर्विज्ञेयः। पूर्वं धातुः साधनेन युज्यत इत्याश्रीयमाणेऽपि प्राचां नये "अकृव्यूहाः पाणिनीयाः"[3] इति परिभाषाया जागरूकत्वात् घुसंज्ञा न भवति। यद्यत्र घुसंज्ञा स्यात्तर्हि युकि कृते तन्निमित्तनाशः स्यादिति सम्भावनायाः विद्यमानत्वात्। सम्भावनायामेव प्राचीनैः परिभाषाप्रवृत्त्यङ्गीकारात्। नव्यनयेऽपि णत्वविधायकं त्रैपादिकासिद्धं पुग्विधायकं च सापादिकमतो णत्वाद्यसिद्धं शास्त्रप्रतिबन्धकपुगादिसिद्धशास्त्र- प्रवृत्तिसम्भावनायां णत्वादिविधायकं यदसिद्धशास्त्रं तदप्रवत्तेरेवाङ्गीकारेण न कश्चन दोषलेशावसरः। अन्तरङ्गरूपो यो हेतुः प्रदर्शितः घुसंज्ञायै तदपि न विचारसहम् यतो हि संज्ञाशास्त्राणि विधिनिमित्तकानि भवन्ति। अर्थात् विधिसूत्रस्य यानि निमित्तानि संज्ञासूत्रस्यापीतिरीत्या घुसंज्ञाया अन्तरङ्गज्ञाया अन्तरङ्गत्वं प्रतिपादयितुं नैव शक्यते।

अथ च यथोद्देशपक्षे यो दोष उद्भावितः तदपि न युक्तिसहम्। यद्यपि दाशब्दस्य तस्मिन् पक्षे घुसंज्ञा सिद्ध्यति तथापि तस्यां वेलायां निशब्दे दाधातुनिरूपितोपसर्गत्वं न भवतीत्यतः णत्वस्य प्राप्तेरेव नास्ति परिभाषामन्तरेण। यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गा इति सिद्धान्तात्। एवमत्रावतरणं सर्वथा सङ्गतं वेदितव्यम्।

एवं दाबित्यस्य घुसंज्ञाया अभावेन प्रणिदापयतीत्यत्र णत्वं दुर्लभं तस्मात् परिभाषां मवतारयति नागेशः "यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृहन्ते"[4] इति। अत्र यस्यागमा इति यदागमाः उद्देश्यत्वं षष्ठ्यर्थः आगमः इत्यस्य चार्थः अवयत्वावच्छिन्नविधेयताश्रयः इति। यमुद्दिश्यागमः सः तद्गुणीभूतः, अगुणः गुणः समपद्यत इति गुणीभूतोऽर्थात् आरोपितावयवत्ववानित्यर्थः। अतः आगामिग्रहणेनागमविशिष्टस्य ग्रहणं जायते।

लोकन्यायसिद्धा चेयं परिभाषा। लोके देवदत्तस्याङ्गाधिक्येऽपि तद्विशिष्टस्यैव देवदत्तग्रहणेन ग्रहणं भवति तथैव शास्त्रेऽपीति ज्ञेयम्।

1. अष्टाध्यायी ७.३.३६
2. अष्टाध्यायी १.१.२०
3. परिभाषेन्दुशेखरः ५६
4. परिभाषेन्दुशेखरः ११

प्रकृते दा शति ग्रहणेन पुगागम विशिष्टस्यैव ग्रहणात् तत्र चार्थवत्त्वस्य सत्त्वात् घुसंज्ञा तस्माच्च णत्वादिसिद्धिरिति भावः।

अत्र यमुद्दिश्य विहितः तद्ग्रहणेनैव गृह्यत इति कथनेन प्रनिदारयतीत्यादौ अतिव्याप्तिर्न भवति। तत्र हि ऋकारमुद्दिश्यारिति वृद्धिर्विहिता तस्मात् ऋकारग्रहणेनाकार ग्रहणेन वा रेफविशिष्टस्य ग्रहणं भवति परं दाशब्दमुद्दिश्य रेफविधानाभावात् दाग्रहणेन दारित्यस्य ग्रहणं न भवतीत्यतो नातिप्रसक्तिः।

इयं च परिभाषाऽनित्यात्र च मानम् "आने मुक्"[1] इति मुग्विधानम् अन्यथाऽकारस्य मुकि अकारग्रहणेन मुग्विशिष्टस्य ग्रहणात् अकारादाने परतः सवर्णदीर्घः स्यात्तथा चाने मुगिति मुग्विधानं व्यर्थं स्यात्। तस्मात्परिभाषेयमनित्या। अत एव 'दिदीय' इत्यत्रापि यकार-विशिष्टिस्येकारग्रहणेन ग्रहणात् यण् प्राप्नोति परिभाषाया अस्या अनित्यत्वात् यण्नेति बोध्यम्।

यद्यपि वर्णस्य वर्णान्तरमवयवो भवितुं नार्हति तथापि सूत्रप्रामाण्येनात्रावयवत्वं बोध्यम्, एवमत्रावयवत्वमित्यस्यावयवसदृशमित्यर्थोऽवधेयः प्राचीना अत्र मुग्विधानसामार्थ्यान्न परिभाषाया अनित्यत्वमपितु वर्णग्रहणे परिभाषेयं नोपतिष्ठत इत्याहुः परं तद्भाष्यविरुद्धमिति प्रत्यपादयन्नागेशः। तथाहि, आने मुगित्यस्याकारस्याङ्गावयवस्य मुगित्यर्थे 'पचमानः' इति स्थले तास्यनुदात्तेत्यादिना स्वरो न स्यादित्याशङ्कितं तत्समाधानं च प्रस्तुतम् अदुपदेशभक्तस्तद्-ग्रहणेन गृह्यते इति। अत्र भाष्यकृता वर्णग्रहणेऽपि परिभाषायाः सञ्चारो विहितः अतः वर्णग्रहणे परिभाषेयं न प्रवर्तत इति कथनं भाष्यविरुद्धम्।

एवमेव "ङमो ह्रस्वादचि ङमुण्नित्यम्"[2] इत्यस्य सूत्रस्य ङमन्तपदावयवस्य ह्रस्वात्परस्य ङमो ङमुदित्यर्थे कुर्पन्नास्ते इत्यत्र ङमुडागमे कृत्ते णत्वप्राप्तिरुद्भाविता तद्वारणाय च पूर्वनकारस्यापि पदान्तग्रहणेन ग्रहणान्न णत्वमित्युक्तम्, एतेन चात्रागमानामागमिधर्म वैशिष्ट्यमपि बोध्यत इत्यपि सूचितमतः वर्णग्रहणे यदागमपरिभाषायाः अप्रवृत्तिरिति मतं भाष्यविरूद्धत्वादुपेक्ष्यम्।

न च नित्यानां शब्दानां मागमादेशादिकं कथं सम्भाव्यते भाष्यकृता "अनपायोपजन-विकार्यनुत्पत्त्यवृद्ध्यव्यययोगि यत्तन्नित्यम्"[3] इति नित्यस्य लक्षणं वर्णितम्, आगमादेशादिसत्त्वे तु शब्दानामनित्यत्वापत्तिः स्यात्, इति चेदत्रोच्यते। अर्थापत्त्या कश्चन विलक्षणः सूत्रार्थो बोध्यः यथा "इको यणचि"[4] इत्यत्र यण्रहितबुद्धिप्रसङ्गे यण्घटिता बुद्धिः कार्या यद्वा यण्घटितोच्चारणं साधु एवमर्थस्वीकारे नैव कश्चन दोषः। शब्दनित्यत्वसंरक्षणायैव "एरुः"[5] इत्यस्य कारान्तस्योकारान्ता- देशः इत्यर्थः प्रोच्यते। उक्तमपि-

1. अष्टाध्यायी ७.२.८२
2. अष्टाध्यायी ८.३.३२
3. महाभाष्यम्, पस्पशाह्निकम्
4. अष्टाध्यायी ६.१.८७
5. अष्टाध्यायी ३.४.८६

**सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः।**

**एकदेशविकारे हि नित्यत्वं नोपपद्यते॥ इति**

एतेन शब्दस्य नित्यत्वं प्रतिपादितं भवति। हरिरप्याह–

**अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।**

**विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥[1] इति**

सुस्पष्टतयात्र शब्दानां नित्यत्वं प्रतिपादितम्। एवञ्च प्रकृतलेखेऽस्मिन् परिभाषाया अवतरणम्, परिभाषार्थः, परिभाषायाः फलम्, तस्या अनित्यत्वम्, प्राचां वर्णग्रहणे परिभाषा न प्रवर्तत इति मतम्, तत्खण्डनम्, शब्दानां नित्यत्वप्रतिपादनञ्च यथाग्रन्थं न्यरूपि।

* * *

1. वाक्यपदीयम् १.१

UGC- CARE Listed | शोधप्रभा
जनवरी-मार्च, 2021 | वर्ष : 46, प्रथमोऽङ्कः

# वेदेषु दैवीयापदस्तन्निरोधोपायाश्च

विद्यावाचस्पतिः
डॉ. सुन्दरनारायणझा*

इष्टप्राप्त्यनिष्टपरिहृतेश्चालौकिका उपाया येभ्य एव विदिता जायन्ते त एव वेदा इति प्रोच्यन्ते। वेदेषु ज्ञान-विज्ञान-धर्म-दर्शन-सदाचार-संस्कृति-नैतिक-सामाजिक-राजनैतिकप्रभृतयो जीवनोपयोगिविषयाः सन्निविष्टाः सन्ति। अत्र प्रेयःशास्त्रं श्रेयः-शास्त्रञ्चोभयं समभावेन समेधितमस्ति।

वेदेष्वनेकाः देवता उक्तास्तेषां प्रतिपादनायास्माकमृषयो देवताग्रन्थाः लिखिताः। देवतानां विषये यास्काचार्येण निरुक्तग्रन्थे बहुविधा चर्चा कृता। तेषां सम्मतौ- **तिस्र एव देवता इति नैरुक्ताः पृथिवीस्थानीयाः, अन्तरिक्षस्थानीयाः, द्युस्थानीयाश्चेति।**[1] शतपथब्राह्मणे तु **अष्टौ वसवः। एकादशरुद्रा द्वादशादित्या इमेऽ एव द्यावापृथिवी त्रयस्त्रिंश्यौ त्रयस्त्रिंशद्वै देवाः प्रजापतिश्चतुस्त्रिंशः।**[2] ऐतरेयब्राह्मणे इयं संख्या द्विगुणिताऽभवत् **त्रयस्त्रिंशद्वै देवाः सोमपास्त्रयस्त्रिंशदसोमपाश्च।**[3] ऋग्वेदस्यैकेन मन्त्रेण देवानां संख्या एकोनचत्वारिंशदुत्तरत्रिशतं त्रिसहस्राणि च (3339) वर्त्तत इति स्फुटं विज्ञायते।[4] अस्याः संख्याया उल्लेखः शतपथब्राह्मणे शाकल्ययाज्ञवल्क्ययोस्संवादे यथा- **कति देवा याज्ञवल्क्येति त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेत्योमिति होवाच**[5] इत्यत्राप्युपलभ्यते। अग्न्यादीनामेकैकस्य पृथक् पृथगवस्थागणने, केन्द्रस्थस्येन्द्रस्य सर्वमण्डलव्यापकस्य प्रजापतेश्चापि सह गणने त्रयस्त्रिंशद्देवाः सम्पद्यन्ते।

वेदानां विषये तैत्तिरीयब्राह्मणे- **अनन्ता वै वेदाः**[6] इत्युक्तम्। अर्थाद्वेदानामानन्त्यं स्फुटमेव विज्ञातं भवति। इत्थं वेदानामानन्त्याद्देवानाञ्चैकैकस्यानन्तकार्यकारित्वात्

---

* सहाचार्यः, वेदविभागः, श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविश्वविद्यालयः, नवदेहली-16

1. निरुक्ते दैवतकाण्डे-7/5
2. श.प.ब्रा.-4/5/7/2
3. ऐतरेयब्राह्मणे- 2/18, श.प.ब्रा.-12/6/1/37
4. त्रीणि शता त्री सहस्राण्यग्निं त्रिंशच्च देवा नव चाऽसपर्यन्। औक्षन् घृतैरस्तृणन् बर्हिरस्मा आदिद्धोतारन्न्यसा. दयन्त।। ऋग्वेदे-3/9/9, 10/52/6, शु.य.सं.- 33/7, तै.ब्रा.- 2/7/12/2
5. श.प.ब्रा.-11/6/3/4
6. तै.ब्रा.- 3/10/11/3

त्रयस्त्रिंशच्छतानि त्रयस्त्रिंशत्सहस्राणीत्यादि देवानां संख्या आख्यायते। इदानीन्तु पुराणाद्याधारेण त्रयस्त्रिंशत्कोटय इत्यपि प्रसिद्धिः।[1] एवमैतरेयब्राह्मणोक्तानन्तवेद-कल्पनावशाद्देवतानामप्यानन्त्यं स्वीकर्तुं शक्यत एव। यतो वेदस्य द्विविधं स्वरूपमुक्तं श्रुतौ यथा-

**द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परञ्च यत्।**
**शब्दब्रह्मणि निष्णातः परब्रह्माधिगच्छति।।**[2]

अनयोर्द्वयोर्ब्रह्मणोर्मध्ये शब्दब्रह्मरूपेण वेदा उक्ताः। ते च वेदाः ब्रह्मात्मकेभ्योऽग्नि-वायुसूर्येभ्यः परमर्षयस्तपोबलेन सम्प्राप्ताः। तदुक्तम्मनुना-

**अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम्।**
**दुदोह यज्ञसिद्ध्यर्थमृग्यजुस्सामलक्षणम्।।**[3]

वेदान्ते यः परमात्मा ब्रह्म इत्युक्तस्स एव वेदेषु प्रजापतिरित्युक्तः। स च प्रजापतिर्देवानां पिताऽस्तीत्युक्तं श्रुतौ- **प्रजापतिर्वै पिता देवानां स जनिता स विभूवसुः।**[4] ऐतरेयारण्यकेऽपि- **प्रजापते रेतो देवाः, देवानां रेतो वर्षम्।**[5] शतपथश्रुतावपि- **प्राचीनप्रजनना वै देवाः प्रतीचीनप्रजनना मनुष्याः।**[6] तस्मादुक्तं मैत्रायण्याम्- **प्राजापत्या देवा**[7] इति। ते देवा पूर्वं मर्त्या आसन् यदा ते संवत्सरमाप्तवन्तस्तदाऽमृता सञ्जातास्तदुक्तं शतपथे- **मर्त्या वाऽ अग्रे देवा आसुः। स यदैव ते संवत्सरमापुरथामृता आसुरिति।**[8] ते च देवा द्योतनशीलत्वाद्देवता इत्युच्यन्ते। तदुक्तं श्रुतिषु- **तस्मै (प्रजापतये) मनुष्यान्त्ससृजानाय दिवा (दिवसः) देवत्रा (द्योतनशीलः) अभवत्। तदनु देवानसृजत। तद्देवानां देवत्वम्।**[9] तथा च **तस्मै पितॄन्त्ससृजानाय दिवाभवत्, तेन देवानसृजत्, तद्देवानां देवत्वम्।**[10]

एभिः प्रमाणैरिदं स्फुटं भवति यद्देवाः प्रजापतेर्ब्रह्मणः पुत्रास्तस्माद्ब्रह्मस्वरूपा एव सन्ति। ब्रह्मणोऽनन्तत्वमसीमत्वन्तु वेदान्तादिषु सुप्रसिद्धमेव। यथा- **सत्यं ज्ञानमनन्तं ब्रह्म**[11] ब्रह्मण आनन्त्याद्ब्रह्मस्वरूपाणां वेदानां देवतानाञ्चानन्त्यमपि सुस्पष्टं भवति। तस्य

---

1. तिस्रः कोट्यस्तु रुद्राणामादित्यानां दशस्मृताः। अग्नीनां पुत्रपौत्रं तु संख्यातुं नैव शक्यते।। अस्य पुराणवाक्यस्योल्लेखः हिन्दू-धर्मकोशे, देवताशब्दवर्णने, 327 तमे पृष्ठे।
2. मैत्रायण्याम्-2/6, अमृतबिन्दूपनिषदि-17
3. मनुस्मृतौ- 2/
4. जैमिनीयब्राह्मणे- 3/135
5. ऐ.आ.- 2/1/3
6. श.प.ब्रा.-7/4/2/40
7. मैत्रायण्याम्- 4/8/9
8. श.प.ब्रा.- 11/1/2/12
9. तैत्तिरीयब्राह्मणे- 2/3/8/3
10. मैत्रायण्याम्- 4/1/2
11. तै.उप.-2/1/1

च ब्रह्मणः स्वरूपं श्रुतावेवमुक्तम्- **यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रत्यभिसंविशन्ति। तद्विजिज्ञासस्व। तद्ब्रह्म।**[1] तदुक्तमपि- **एकं सद्विप्रा बहुधा वदन्ति**[2] तथा च मीमांसका:- **अनन्ता वै देवा:** इति।

केषाञ्चन विदुषां सम्मतौ वैदिका ऋषय: प्रकृतौ विद्यमानेष्वग्निजलवायुसूर्यादिष्वेव देवतात्वमकल्पयन् इति स्फुटं भवति। मानवानामखिलानि कार्याणि आसां देवतानुकम्पयैव सम्पद्यन्ते इति तेषामृषीणां विश्वास:। संसारेऽस्मिन् घटमानानामखिलानामपि घटनानां कारणभूता देवता एवेति।

पाश्चात्यपण्डिता इमा वैदिकदेवता: प्रकृत्या एव प्रतिरूपं मन्यन्ते, किञ्च भारतीयविदुषां दृशि चैतन्यहीना जडा प्रकृति: कदाचिदपि देवतारूपेण ग्रहीतुं न शक्यन्ते। वस्तुत: प्रकृते: शक्तीनामुपरि प्रशासनकर्तृणां चैतन्यदेवतानां पूजैवाभीष्टं भवति। तत्राह भगवान् बादरायण:- **अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्**[3] इत्येव देवतत्त्वम्मन्यते।

प्राकृतिकानि यान्यपि तत्त्वान्यस्माकमक्षिलक्षीभूतानि सन्ति तेषां समेषामुपरि यस्या देवताया अधिष्ठातृत्वम्भवति, तानि सर्वाण्यपि तत्त्वानि तत्तद्दैवतनामभिरेव विज्ञातानि भवन्ति। यथा लोकेऽप्येवं दृश्यते यद्यस्मिन् ग्रामे कश्चिन्मानवो गुणगौरवादिभि: प्रसिद्धो भवति तस्य ग्रामस्य परिचयस्तेनैव नाम्ना जायते। भवतु नाम ग्रामस्य स्थापना तस्मात्पुरुषादुत्पत्ते: पूर्वं स्यात्परं भविष्यत्कालेषु तेनैव नाम्ना तस्य ग्रामस्य प्रसिद्धिर्भवति। तस्मादेतस्मादेव कारणात् तेषां प्राकृतिकतत्त्वानां स्मरणं तत्तदभिमानिदेवतारूपेणैव वेदेषु कृतं दृश्यते। यथोक्तमपि- **अग्निर्देवता वातो देवता सूर्यो देवता चन्द्रमा देवता वसवो देवता रुद्रा देवताऽऽदित्या देवता मरुतो देवता विश्वेदेवा देवता बृहस्पतिर्देवतेन्द्रो देवता वरुणो देवता**[4] इति। इत्थमग्निवायुसूर्याद्या: देवता उक्ता:। ताभिरेव देवताभिस्सकाशान्मनुष्या: स्वं स्वमभीष्टं साधयितुं कामयन्ते। अत एव यज्ञेषु देवतामुद्दिश्य द्रव्याणां त्याग: क्रियते। सा च देवता यजमानायाभीष्टं फलं प्रयच्छति। यज्ञस्य लक्षणं कुर्वता भगवता कात्यायनेनोक्तं- **द्रव्यं देवता त्याग**[5] इति। अर्थाद्यस्मिन् कर्मणि श्रद्धापूर्वकं देवतोद्देशेन घृतादीनामाहुतिर्दीयते, हविर्द्रव्याणां त्यागो विधीयते तद्यज्ञ:। भगवता पाणिनिना **यज् देवपूजासङ्गतिकरणदानेषु**[6] सूत्रं विहितम्। सूत्रेणानेन त्रिष्वर्थेषु यज्धातो: प्रयोगो दृश्यते। तत्र प्रथमोऽर्थो **देवपूजेति**। देवपदवाच्यं जडतत्त्वं स्याद्यदि वा चेतनतत्त्वम्, **सर्वैस्सहानुकूलवेद्यव्यवहरणं** देवपूजेत्युच्यते। प्राकृतानामग्निजलवाय्वादीनां पदार्थानां प्राणिमात्रस्य कल्याणायोचितोपयोगो देवपूजा ज्ञेया। प्राकृतानां पदार्थानां

1. तै.उप.- 3/1/1
2. ऋग्वेदे- 1/164/46
3. ब्रह्मसूत्रे- 2/1/5
4. शु.य.सं.- 14/20
5. कात्यायनश्रौतसूत्रे- 1/2/2
6. पा.धा.-1/728

यथोचितमात्रासु तथा संयोगकरणं, येन प्राणिनां कल्याणम् उत्कर्षो वा स्यात्, श्रेष्ठानां धर्मात्मनां विदुषां सङ्गश्च **सङ्गतिकरणमित्युच्यते**। स्वयमुपार्जितधनसम्पत्तिविद्यादीनां प्राणिमात्रस्य कल्याणायोत्सर्जनं दान-पदवाच्यमिति।

## दैवीयापदस्तन्निरोधोपायाश्च

यज्ञोऽयमाधिदैविकाधिभौतिकाध्यात्मिकभेदात्त्रिविधः। तत्राग्निवायुसूर्यादिषु सनातनब्रह्मसु देवेषु सम्पद्यमानो यज्ञ आध्यात्मिकः, पृथिव्यप्तेजोवाय्वाकाशादिषु भौतिकपदार्थेषु सम्पद्यमानो यज्ञ आधिभौतिकः, जीवशरीरेष्वात्मतत्त्वेषु सम्पद्यमानो यज्ञश्चाध्यात्मिक इत्युच्यते। अत्राधिदैविकाधिभौतिकौ च यज्ञौ प्राकृतयज्ञान्तर्गतौ स्तः। प्रकृतिरूपा देवताः प्रकृत्यभिमानिन्यश्च देवताः समाना एवेत्युक्तं प्राक्। तेषु प्राकृतिकपदार्थेषु कदाचित्कस्माच्चित्कारणाद्यवरोधो जायते तदा जगति विषमा परिस्थितिरुत्पद्यते। तदवरोधः प्रकृतौ कदाचित्स्वयमेवोत्पद्यते कदाचिच्च मानवीयप्रयत्नैरुत्पद्यते। तैश्च प्राकृतिकैः पदार्थैर्मानवीयैः प्रयत्नैश्च यदा प्राकृतिकगतिविधिष्ववरोध उत्पाद्यते तदवरोधः प्राकृतिको दैवीयो वा प्रकोपो भवति। प्रकोपमिमं **दैवीयमापदिति** वक्तुं शक्यते। तस्माद्भूकम्पातिवृष्ट्यनावृष्ट्याद्युत्पाता दैवीयापदमित्युच्यन्ते।

**दैवीयापन्निरोधाय श्रौतयज्ञानुष्ठानम्-** वेदेषु दैवीयापदां विषये इन्द्रवृत्रासुरयोर्युद्धं तु प्रशस्तमेवास्ति। ऋग्वेदीयो शरमा-पणिसंवादोऽपि प्रशस्त एव। यजुर्वेदे इडाविधानप्रसंगोऽन्याश्च बह्व्य आख्यायिकास्सन्ति प्रसिद्धाः, येषु दैवीयापदां वर्णनमवलोक्यते। आसां सर्वासामापदां स्वरूपाणामध्ययनेनेदं ज्ञायते यद्वर्त्तमाने युगेऽपि याः प्राकृतिकाः घटनाः भवन्ति तासु घटनास्वपि मुख्या देवा एव। आसां प्राकृतिकोत्पातानां निवारणाय देवतानां प्रसन्नतावाप्तिरनिवार्या भवति। देवतानां प्रसन्नतायै चास्माभिर्यत्किमपि कर्म क्रियते तेषु सर्वेष्वपि कर्मसु यज्ञस्य महन्महत्त्वं वर्त्तते।

शतपथब्राह्मणे न केवलं देवानामात्माऽपितु समस्तस्यास्य चराचरस्यात्मात्वेन यज्ञः स्तुतोऽस्ति यथा- **सर्वेषां वा एष भूतानां सर्वेषां देवानामात्मा यद्यज्ञस्तस्य समृद्धिमनु यजमानः प्रजया पशुभिर्ऋद्ध्यते**[1] इति। तेनेदं स्फुटं भवति यद्यज्ञानां रक्षणेन देवतानामात्मरक्षा भवति। तस्मादेव कारणाद्वेदेषु यज्ञविद्याया विशेषेण वर्णनमुपलभ्यते। यज्ञानुष्ठानेन देवतानां चराचराणाञ्च संरक्षणम्भवतीत्युच्यते। तदुक्तं विष्णुधर्मोत्तरपुराणे-

**यज्ञेन देवा जीवन्ति यज्ञेन पितरस्तथा।**
**देवाधीनाः प्रजाः सर्वा यज्ञाधीनाश्च देवताः।।**
**यज्ञो हि भगवान् विष्णुर्यत्र सर्वं प्रतिष्ठितम्**
**यज्ञार्थं पशवः स्रष्टा देवास्त्वौषधयस्तथा।।**

---

1. श.प.ब्रा.- 13/3/2/1

**यज्ञार्थं पुरुषाः स्रष्टाः स्वयमेव स्वयम्भुवा।**
**यज्ञश्च भूत्यै सर्वस्य तस्माद्यज्ञपरो भवेत्॥**
**यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्विषैः।**
**धनं यद्यज्ञशीलानां देवस्वं तं विदुर्बुधाः॥**
**यज्ञेन सम्यक्पुरुषस्तु नाके सम्पूज्यमानस्त्रिदशैर्महात्मा।**
**प्राप्नोति सौख्यानि महानुभावाः तस्मात्प्रयत्नेन यजेत यज्ञैः॥**[1]

उक्तविवेचनेनेदं सुस्पष्टं भवति यद्यज्ञ एव सर्वविधकल्याणस्य मार्गं निर्दिशति। वैदिकयज्ञेषु याः सूक्ष्मातिसूक्ष्माः प्रक्रियाः वर्णितास्सन्ति तास्सम्यगस्माभिराचरणीयाः। तत्र कृते प्रमादे सत्यनेका उत्पाताः सम्भवन्ति याः दैवीयापद इत्युच्यन्ते। उदाहरणार्थमिह काश्चन प्रक्रियाः प्रस्तूयन्ते।

वेदेषु येषां यज्ञानां वर्णनमुपलभ्यते ते श्रौतयज्ञा इत्युच्यन्ते। श्रौतयज्ञेष्वग्निष्टोमस्य महत्त्वपूर्णं स्थानमस्ति। अग्निष्टोमयागाय प्रवृत्तो यजमानो यदा सोमक्रयणं कर्तुं सोमक्रयणीं गामादाय सौमिकवेदेर्दक्षिणद्वारादुपरवप्रदेशं प्रति गच्छति तदानीम् **उदीचीं नीयमानामनुगच्छतो वस्व्यसीति। षट्पदान्यतीत्य सप्तमं पर्युपविशन्ति। हिरण्य-मस्मिन्निधायाऽभिजुहोत्यदित्यास्त्वेति। स्फ्येन पदं त्रिः परिलिखत्यस्मे रमस्वेति। समुद्धृत्य पदं स्थाल्यामावपत्यस्मे ते बन्धुरिति। अपः स्थाने निषिच्य यजमानाय पदं प्रयच्छति त्वे राय इति।**[2] इति कात्यायनश्रौतसूत्रोक्तविधिनेदं सुस्पष्टं भवति यद्यदा भूमेः सकाशादस्माभिः पांसुग्रहणं क्रियेत तदानीं तस्मिन् गर्ते जलस्यासेचनमवश्यमेव कर्त्तव्यमिति। जलसेचनेनानेन कर्मणा मृद्ग्रहणेन य आघातो भवति तस्य परिपूर्तिर्जायत इति भावः।

अस्याः प्रक्रियाया आधारस्त्वथर्ववेदस्यैकस्मिन् मन्त्रे स्पष्टमभिलक्ष्यते यथा-

**यत्ते भूमे विखनामि क्षिप्रं तदपि रोहतु।**
**मा ते मर्म विमृग्वरि मा ते हृदयमर्पिपम्॥**[3]

मन्त्रस्यास्य तात्पर्यमिदमस्ति यद्भूमेर्यस्मिन् स्थले वयं खननं कुर्मस्तमवश्यमस्माभिः शीघ्रमेव पूरणीयम्। कस्यामप्यवस्थायां पृथिव्याः हृदि मर्मस्थले च क्षतिकारकं कर्म न करणीयमिति। तात्पर्यमिदमस्ति यत्पृथिव्या मर्मस्थलाद्वयं रत्नानि, कृष्णाङ्गारकोषः, वाष्पीयतत्त्वं (गैस), इन्धनादिकञ्च निष्कासयामः, तेन भूमेः स्थानं रिक्तं भवति। रिक्तं तत्स्थानं पुनरस्माभिः पूरणीयमिति। यद्येवं न कुर्मस्तदा भूमिरसन्तुलिता भवति। यस्मात् कारणाद्भूकम्पः, भूभागस्य अधोगमनम्, जलादिस्रोतसाञ्च नाशः सम्भवतीति।

---

1. वि.ध.पुराणे- 162/1-4,7
2. का.श्रौ.सू.-7/6/14-19
3. अथर्ववेदे- 12/1/35

मन्ये अस्माकं वैदिका ऋषयः एतत्सर्वं सम्यक्तया जानन्तिस्म। अत एव **माता भूमिः पुत्रोऽहं पृथिव्याः**[1] इत्युद्घोषयन्तस्ते श्रौतयज्ञप्रयोगेषु प्रक्रियायां मृदमुद्धृत्यापो निषिञ्चेदिति व्यवहारः प्रदर्शितवन्तः। अद्यत्वे वयं विस्मरामस्ताः प्रक्रियास्तस्मादेव कारणादनेका दैवीयापदः सुरसैव मुखं विस्तीर्यास्माकं जीवने काले-काले समागत्य ताडयन्त्यस्मान्। सावधानैरस्माभिर्भाव्यं नो चेदस्माकं नाशः सुनिश्चित एव। एवंविधा अनेकेषु स्थलेषु दैवीयापन्निरोधाय मार्गदर्शकसिद्धान्ताः वेदेषूपलभ्यन्ते येषामन्वेषणमनुपालनञ्चास्माभिस्सर्वविधप्रयत्नैः करणीयम्। येनास्माकं सर्वविधं कल्याणं सम्भवति। श्रौतयज्ञ एवैको मार्गो योऽस्माकं सर्वविधोत्पातैः रक्षणे समर्थस्तस्मादुक्तं श्रुतौ- **यज्ञो वै श्रेष्ठतमं कर्म**[2] इति।

**कोरोनासङ्कटः**- कोरोनानामकः कश्चित् कृमिविशेषोऽस्ति यश्चात्यन्तसूक्ष्मस्तस्मात्तस्य साक्षात्परिज्ञाने खल्वमस्माकं वैज्ञानिकाश्चिकित्सकाश्च साम्प्रतं यावत् पूर्णतः सफला न दृश्यन्ते। वैदिककाले असुरास्त्वेवमेव विविधानि सूक्ष्मातिसूक्ष्माणि शरीराणि (स्वरूपाणि) धृत्वा यज्ञेषु विश्वकल्याणनिमित्तेष्वनुष्ठीयमानेषु विघ्नमुत्पादयितुं देवतानामृषिमुनीनां समक्षं समायान्ति स्म। यथा देवा सर्वकालेषु विद्यमाना भवन्त्येवमेवासुराश्चापि न कदापि पूर्णतो नष्टा भवन्त्युत सर्वदैव सूक्ष्मातिसूक्ष्मरूपेणास्मिञ्जगति सर्वत्र विद्यमाना एव भवन्ति। यतस्तु **देवाश्च वाऽसुराश्चोभये प्राजापत्याः**[3] अर्थाद्देवाश्चासुराच प्रजापतेः पुत्रास्सन्ति। यथा प्रजापतेस्सर्वकालेषूपस्थितिः स्वीक्रियते तथैव देवानामसुराणाञ्चापि सर्वकालेषूपस्थितिरस्माभिः पिहितेन चक्षुषा स्वीकरणीयैव। देवैः कृमिरोगनिवारणाय बहुविधं प्रयत्नं विहितं तस्य वर्णनमथर्ववेदे पठ्यते। देवदर्शितपथमनसृत्यास्माभिः कृमिरोगेणानेन निवृत्तिः प्राप्तुं शक्यत इति मदीयो विश्वासः। तदर्थमिह तत्सूक्तमुपस्थाप्यते-

**क्रिमिनाशनसूक्तम्** (अथर्व-2/32)

**उद्यन्नादित्यः क्रिमीन् हन्तु निम्रोचन् हन्तु रश्मिभिः ।**
**ये अन्तः क्रिमयो गवि ॥१॥**
**विश्वरूपं चतूरक्षं क्रिमिसारङ्गमर्जुनम् ।**
**शृणाम्यस्य पृष्टीरपि वृश्चामि यच्छिरः ॥२॥**
**अत्रिवद्वः क्रिमयो हन्मि कण्ववज्जमदग्निवत् ।**
**अगस्त्यस्य ब्रह्मणा सं पिनष्म्यहं क्रिमीन् ॥३॥**
**हतो राजा क्रिमीणामुतैषां स्थपतिर्हतः ।**
**हतो हतमाता क्रिमिर्हतभ्राता हतस्वसा ॥४॥**

---

1. अथर्ववेदे- 12/1/12
2. श.प. ब्रा.- 1/7/1/5
3. श.प.ब्रा.-1/2/4/8 एवमनेकत्र प्रयुक्तः।

हतासो अस्य वेशसो हतासः परिवेशसः ।
अथो ये क्षुल्लका इव सर्वे ते क्रिमयो हताः ॥५॥
प्र ते शृणामि शृङ्गे याभ्यां वितुदायसि।
भिनद्मि ते कुषुम्भं यस्ते विषधानः ॥६॥

**क्रिमिजम्भनम्**

इन्द्रस्य या मही दृषत् क्रिमेर्विश्वस्य तर्हणी।
तया पिनष्मि सं क्रिमीन् दृषदा खल्वाँ इव ॥१॥
दृष्टमदृष्टमतृ हमथो कुरूरुमतृहम् ।
अल्गण्डूत्सर्वान् छलुनान् क्रिमीन् वचसा जम्भयामसि ॥२॥
अल्गण्डून् हन्मि महता वधेन दूना अदूना अरसा अभूवन् ।
शिष्टानाशिष्टान् नि तिरामि वाचा यथा क्रिमीणां नकिरुच्छिषातै ॥३॥
अन्वान्त्र्यं शीर्षण्य१मथो पार्ष्टेयं क्रिमीन् ।
अवस्कवं व्यध्वरं क्रिमीन् वचसा जम्भयामसि ॥४॥
ये क्रिमयः पर्वतेषु वनेष्वोषधीषु पशुष्वप्स्व१न्तः।
ये अस्माकं तन्वमाविविशुः सर्वं तद्धन्मि जनिम क्रिमीणाम् ॥५॥

अस्य सूक्तस्य वैज्ञानिकदृष्ट्यान्वेषणं कृत्वा तत्रोक्तेनोपायेन यज्ञानुष्ठानेन च यदि वयमस्य कृमिरोगस्य निवारणं कर्तुमुद्यतो भविष्यामश्चेदवश्यमेवास्माकं कल्याणं सम्भविष्यतीति मदीयो विश्वासः। परमस्त्यत्रानुसन्धानस्यावश्यकता, यतस्तु सूक्तपाठेनांशिको लाभ एव सम्भवति। अतो न केवलं सूक्तपाठेनैव सम्यक्फलप्राप्तिर्भवितुमर्हति, अपितु सूक्तेऽस्मिन् ये वैज्ञानिकसिद्धान्ताः प्रतिपादितास्सन्ति तेषामुपर्युचितेन शोधेनानुष्ठानस्योचितं मार्गमन्विष्यानुष्ठानेनोचितफलप्राप्तिस्सम्भवा। आधुनिका वैज्ञानिका विषयेऽस्मिन् किं चिन्तयन्ति तदहं न जाने, परं वेदेषु यन्मया पठितं दृष्टं यच्चावगतं तदेवात्रोपस्थाप्य स्वीयां लेखनीं विरमामीत्यलमति विस्तरेण।

जयतु संस्कृतम्। जयतु भारतम्। जयन्तु वेदाः।

* * *

UGC - CARE Listed
जनवरी-मार्च, 2021

शोधप्रभा
वर्ष : 46, प्रथमोऽङ्कः

# प्रातिशाख्यपाणिनीयव्याकरणयोर्दृष्ट्या स्वरितस्वरविमर्शः

डॉ. सूर्यमणिभण्डारी*

## सामान्यस्वरितस्वरविवेचनम्-

यत्राक्षरोच्चारणध्वनेरारोहावरोहशिथिलप्रक्रमेण वायुनिमित्तगात्राणामूर्ध्वादिगमनं भवति तत्रोदात्तादयस्संज्ञा भवन्तीति प्रातिशाख्यादिग्रन्थेषु वर्ण्यते। तमेव क्रममनुसृत्यास्मिन् शोधपत्रे सविस्तरं सप्रमाणं स्वरितस्वरो विचार्यते। तत्र हि यस्मिन्नचि उदात्तत्वानुदात्तत्वयोर्वणधर्मयोः समाहारः, सोऽच् स्वरितसंज्ञको भवतीति "**समाहारःस्वरितः**" इति सूत्रार्थः[1]। यथा **अ॒ग्निमी॑ळे**[2] इत्यत्र मकारोत्तरवर्त्ती दण्डाकारेण चिह्नितः ईकारः स्वरितसंज्ञकः। अयञ्च स्वरितस्वरः क्षीरोदकसंपृक्तवदभिन्नरूपः, कथमपि न ज्ञायते यत् कस्मिन्भागे उदात्तः, कस्मिन्ननुदात्त इति । अत्र भाष्यकार आह- आमिश्रीभूतमिवेदं भवति। तद्यथा क्षीरोदके सम्पर्के आमिश्रिभूतत्वान्न ज्ञायते कियत् क्षीरं कियदुदकमिति, कस्मिन्नवकाशे क्षीरं, कस्मिन्नुदकमिति, एवमिहाप्यामिश्रीभूतत्वान्न ज्ञायते कियदुदात्तं कियदनुदात्तम् कस्मिन्नवकाशे उदात्तं कस्मिन्ननुदात्तमिति[3]। तथापि "**तस्यादित उदात्तमर्धह्रस्वम्**"[4] इति सूत्रद्वारा उदात्तानुदात्तयोः पार्थक्यं सुस्पष्टं भवति, यत् तस्य स्वरितस्यादौ अर्धह्रस्वमुदात्तं भवति, परिशिष्टमनुदात्तमिति[5]। अनेन ज्ञायते यत् उदात्तस्यांशोऽल्पः, अनुदात्तस्य त्वधिक इति, तद्यथा-**कन्या** इत्यत्र यकारोत्तरवर्त्ती आकारः स्वरितः प्रतिज्ञायते, तत्र तस्यादेरर्धमात्रा उदात्ता, परिशिष्टा अध्यर्धमात्रा त्वनुदात्तेति। एवं प्लुतस्थलेऽपि विभागः कल्पनीयः। अयं च पक्षः काशिकाकारमते वर्तते। तेषां मते हि ह्रस्वशब्दः अर्धमात्रायामुपलक्षको भवति तेन ह्रस्वदीर्घप्लुतानामादितोऽर्धमात्रोदात्ता भवति। सिद्धान्तकौमुदीकारपक्षे तु सूत्रे ह्रस्वशब्दस्य

---

*अतिथि-सहायकाचार्यः, श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविश्वविद्यालयस्य, व्याकरणविभागे

1. पा. अ. 1/2/31
2. ऋ.सं. 1/1/1
3. स.भा. 01/2/32
4. पा. अ. 1/2/32
5. का.वृ. 1/2/32

अविवक्षितत्वात् सर्वत्र ह्रस्वदीर्घादिस्थले समप्रविभागो दृश्यते[1]। शुक्लयजुर्वेदप्रातिशाख्यमते हि अभिघातो नाम कश्चन शरीरस्य विकारः, यत्र गात्राणां तिर्यग्गमनं भवति[2] । तेन यः स्वरो निष्पद्यते सः स्वरितसंज्ञक इति। स च उच्चनीचाभ्यामभिनिर्वर्त्यते[3]। **'उभयवान्स्वरितः'**[4] उदात्तस्योर्ध्वगमनं गात्राणां प्रयत्नः, अनुदात्तस्याधोगमनं गात्राणां प्रयत्नः, आभ्यां प्रयत्नाभ्यां समाहारीभूताभ्यां यः स्वर उच्चार्यते सः स्वरितसंज्ञको भवति। तथा ऋक्प्रातिशाख्यकारमतेऽपि अस्य प्रयत्नस्य आक्षेपपदेन व्यवहारः । तत्र व्याख्याने उव्वट आह -आक्षेपो नाम तिर्यग्गमनं गात्राणां वायुनिमित्तमिति[5]। तथैव अथर्वप्रातिशाख्यमतेऽपि**''आक्षिप्तं स्वरितम्''**[6] इति समानाकारमेव मन्तव्यम्। तत्रापि आक्षिप्तपदेनोच्चारणावयवानां तिर्यग्गमनं स्वीक्रियते, तथा सति अस्यार्थो भवति यत् - समानस्वरे उच्चारणावयवानां तिर्यग्गमनेनोच्चार्यमाण-मक्षरं स्वरितसंज्ञकं भवति। तैत्तिरीयस्वरितसंज्ञाविधायकं सूत्रं पाणिनीवत्समानाकारम्, यथा - **''समाहारस्स्वरितः''**[7] समाह्रियत इति समाहारः, उदात्तानुदात्तयोर्मेलनजन्यः स्वरः स्वरित इति । तत्र वैदिकाभरणे स्वरितस्य लक्षणं क्रियते 'स्वर्यते पार्श्वत उत्क्षिप्यत इति स्वरितः, अतोऽर्थः क्रियते समाहार = उभयोस्संभेदात्मकः, यथोक्त भागद्वयजन्मना प्रयत्नेन कर्णमूलोच्चार्यमाणस्वरः स्वरितगुणत्वात्स्वरितसंज्ञो भवति[8]।

**शिक्षाग्रन्थेषु संज्ञाविचारः-**

उदात्तादिसंज्ञाविषये आपिशलिशिक्षासूत्रे च - यदा सर्वाङ्गानुसारी प्रयत्नस्तीव्रो भवति तदा गात्रस्य विग्रहः, कण्ठाविलस्य चाणुत्वं, स्वरस्य च वायोस्तीव्रगतित्वाद् रौक्ष्यं भवति, तमुदात्तमाचक्षते शाब्दिकाः। यदा तु मन्दः प्रयत्नो भवति , तदा गात्रस्य स्रंसनं कण्ठविलस्य महत्त्वं स्वरस्य च वायोर्मन्दगतित्वाद् स्निग्धता भवति तमनुदात्तमाचक्षते । उदात्तानुदात्तस्वरनिपातात् स्वरित इति।[9] व्यासशिक्षायामपि -

**उदात्तोच्चारणे तस्य देहदैर्घ्यं भवेद् यतः।**
**उच्चारणेऽनुदात्तस्य देहस्य ह्रस्वता भवेत्**
**भवेत् तत्र समाहारःस्वरितश्चोच्चनीचयोः**[10]

---

1. वै. सि. कौ. सं.
2. वा.प्रा. 1/31
3. वा.प्रा. 1/32
4. वा.प्रा. 1/110
5. ऋ.प्रा.उ.भा. 3/1
6. अथ. प्रा. 1/16
7. तै. प्रा. 1/40
8. तै. प्रा.वै.भ. -1/40
9. आ.शिक्षा 8/21-23
10. पा.अ. 8/4/65

प्रसङ्गात् स्वरितस्य विधिप्रदेशविषयो विचार्यते। स्वरितस्वरविधानविषये सामान्यसूत्रं पाणिनीयशास्त्रे '**उदात्तादनुदात्तस्य स्वरितः**'[1] इति वर्तते । अनेनोदात्तात् परेषामनुदात्तानामचां स्वरितस्वरो विधीयते । यथा-**गार्ग्य** इत्यत्र गर्गप्रातिपदिकात् **गर्गादिभ्यो यञ्**[2] इत्यनेन गोत्रापत्ये यञ्प्रत्ययः क्रियते । यञ्प्रत्ययस्य ञित्त्वात् **ञ्नित्यादिर्नित्यम्**[3] इत्यनेन गार्ग्यशब्द आद्युदात्तः । ततः '**अनुदात्तपदमेकवर्जम्**' इत्यनेन सूत्रेण शेषस्यानुदात्तः । तस्यानुदात्तस्यानेन सूत्रेण स्वरितादेशे कृते **गार्ग्यः** इति स्वरितान्तं पदं निष्पद्यते । एवं पचति इत्यत्र पच्+शप्+ तिप् शप्तिपौ प्रत्ययौ पित्त्वात् '**अनुदात्तौ सुप्पितौ**'[4] इत्यनेनानुदात्तौ । पकारोत्तरवर्त्यकारः धातुस्वरेणोदात्तः। तस्मात् परस्य शपोऽकारस्य स्वरितत्वम्। एवं रूपेण सर्वत्रोदात्तात् परवर्तिनोऽनुदात्तस्य स्वरितविधानं करोतीदं सूत्रम्। तेन **पचति** इति मध्यस्वरितं पदम्। अस्मिन् विषये प्रातिशाख्येऽप्यनेनैव रूपेणोल्लेखः क्रियते । यथा-

**प्रातिशाख्यम्** -वाजसनेयिप्रातिशाख्यग्रन्थे स्वरितविधायकं सूत्रं वर्तते-**उदात्ताच्चानुदात्तं स्वरितम्**[5] अर्थात् - उदात्तात्परं व्यञ्जनेन व्यवहितमनुदात्तमक्षरं स्वरितं भवति । यथा - **स्वाहा । वाजः । पयः । नमः ।**[6]

तैत्तिरीयप्रातिशाख्येऽपि -**उदात्तात्परोऽनुदात्तः स्वरितम्**'[7] सुस्पष्टमेव ।

**निषेधविचारः** - **नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम्**'[8] इत्यनेन सूत्रेण उदात्तोदयस्य स्वरितोदयस्य चानुदात्तस्य स्वरितादेशो निषिध्यते । अर्थाद् यस्माद् अनुदात्तात् परे उदात्तः स्वरितो वा भवति तदा तस्यानुदात्तस्य स्वरितादेशो न भवतीतीति। उदात्तोदयस्य यथा-**गार्ग्यस्तत्र । वात्स्यस्तत्र ।**

स्वरितोदयस्य यथा- **गार्ग्यःक्व । वात्स्यः क्व ।**

गार्ग्यशब्दो यञ्प्रत्ययान्तत्वाद् आद्युदात्तः । यकारोत्तरवर्त्यकारोऽनुदात्तः, तस्य तत्रेत्यनेन शब्देनान्वये कृते स्वरितादेशो न भवति । यतो हि तत्रशब्दः **सप्तम्यास्त्रल्**[9] इति त्रल्प्रत्ययान्तत्वेन लित्त्वात् '**लिति**'[10] इत्यनेन सूत्रेणाद्युदात्तस्तेन स्वरितादेशो न भवति। एवं गार्ग्यः क्व' इत्यत्रापि क्वशब्दः, किमोऽत्[11] इति किम्शब्दादत्प्रत्ययः तित्त्वात् '**तित्स्वरितं**'

---

1. पा. अ. 8/4/65
2. पा. अ. 4/1/105
3. पा. अ. 6/1/191
4. पा. अ. 3/1/4
5. वा.प्रा. 4/137
6. पा.सं. 4/6, 18/1, 36, 16/1
7. तै.प्रा. 14/29
8. पा.अ. 8/4/66
9. पा.अ. 5/3/10
10. पा.अ. 6/1/193
11. पा.अ. 5/3/12

इत्यनेन स्वरितो भवति। अतः गार्ग्यः इत्यस्य क्वशब्देनान्वये यकारोत्तरवर्तिनोऽनुदात्तस्याकारस्य स्वरितादेशो न भवति तस्यस्वरितोदयात् (स्वरितपरकत्वात्) इति ।

**प्रातिशाख्यम्**-वाजसनेयिप्रातिशाख्येऽस्मिन् विषये सूत्रं वर्तते "**निहितमुदात्तस्वरितपरम्**"[1] अर्थात्-उदात्तपरं स्वरितपरं च स्वरिताक्षरं निहन्यते। यथा-**नमः हिर॑ण्यबाहवे =नमो हिरण्यबाहवे।** अत्र नम इति पदं निपातसंज्ञकत्वादाद्युदात्तम्, ततः परस्यानुदात्तस्य स्वरितादेशे कृते पुनः तस्य स्वरितस्य हिरण्यमित्याद्युदात्त-पदपरकत्वेऽनुदात्तो भवति। एवं हि स्वरितपरं यथा-**भूर्भुवः स्वः द्यौरिव**[2]। इदं त्वनवग्रहविषय एव भवति। अवग्रहे तु न तथा, तत्र तु स्वरित एव स्यात्। यथा- तनूनप्त्र इति **तनू- नप्त्रे।** अत्र **'तनू-नप्त्र'** इति सम्पूर्ण सावग्रहसंज्ञकं पदम्। तस्य यः पूर्वो भागः **'तनू'** इति तदवग्रहसंज्ञकं भवति। तस्मात् उदात्तपरे स्वरितपरे वा स्यात्, किञ्च तस्य स्वरित एव स्वरो भवति, न तु निषेधः। तैत्तिरीयप्रातिशाख्येऽप्युक्तम् -**नोदात्तः स्वरितः स्वरः**[3]। इदमपि सूत्रम् उदात्तपरस्य स्वरितपरस्यानुदात्तस्य स्वरितनिषेधकरम् । यथा-**स इमं लोकम्।** तत्रापि

अग्निवेश्यायनस्य मते उदात्तपरः स्वरितपरो वा उदात्तात्परोऽनुदात्तः स्वरितमापद्यते न तु निषिध्यते[4]। एके शाखिनो मन्यन्ते यन्न केवलमुदात्तात् परः किन्तु सर्व एव सप्तविधस्वरितो नास्तीति। तथाहि- अवग्रहे वाजसनेयिब्राह्मणे द्वावेव स्वरावुदात्तानुदात्तौ भाषिकसंज्ञकौ[5]। एकेषामाचार्याणां मते उदात्ते स्वरिते वा परभूते सति स्वरितस्वरस्य परवर्तिभागोऽनुदात्तो भवति। यथा-**प्रसवेऽश्विनोः। परमेष्ठ्यभिधीतः।**[6] वाजसनेयिनां निहितमुदात्त-स्वरितपरम् इत्यनेनानुदात्त एवेति विशेषः। पाणिनीयग्रन्थानुसारं तित्प्रत्ययस्यापि स्वरितस्वरो भवति । यथा- **कर्त्तव्यम्** इत्यत्र **'तव्यत्तव्यानीयरः'**[7] इत्यनेन तव्यत्प्रत्यये कृतेऽयं शब्दो निष्पद्यते प्रत्ययस्य तित्त्वात् **'तित्स्वरिम्'**[8] इति सूत्रेण प्रत्ययस्य स्वरितादेशो भवति। प्रातिशाख्ये तु प्रत्ययगतस्वरस्तथा न दृष्टः कुत्रचिदपि ।

**प्रातिशख्योक्तजात्यादिस्वराणां विचारः-**

प्रातिशाख्यग्रन्थेषु विशेषतो जात्याद्यष्टविधस्वरिताश्चर्च्यन्ते । तेषां क्रमशो नामानि यथा-

---

1. वा.प्रा. 4/138
2. वा.सं. 3/5
3. तै.प्रा. 14/31
4. तै.प्रा. 14/32
5. सर्वो नेत्त्येके सर्वो तेत्येके, पै.प्रा.त्रि.भा. 14/33
6. वा.सं. 1/10, 8/54
7. पा. अ. 3/1/
8. पा. अ. 6/1/

(1) जात्यस्वरितः, (2) अभिनिहितस्वरितः, (3) क्षैप्रस्वरितः, (4) प्रश्लिष्टस्वरितः, (5) तैरोव्यञ्जनस्वरितः, (6) तैरोविरामस्वरितः, (7) पादवृत्तस्वरितः एवं (8) ताथाभाव्यस्वरितश्चेति। तेषां लक्षणपरिष्कारे सर्वप्रथमं जात्यसंज्ञकस्वरितो विचार्यते।

**जात्यस्वरः**-वाजसनेयिप्रातिशाख्यग्रन्थे जात्यसंज्ञाविधायकं सूत्रं वर्तते-**''एकपदे नीचपूर्वः सयवो जात्यः''**[1] भावार्थो यथा- एकस्मिन् पदेऽनुदात्तपूर्वो यो यकारेण वकारेण वा सहितः स्वरितः स्वरः स जात्यसंज्ञको भवति यथा-**कन्या। धान्यमसि**[2]। अत्र नीचपूर्व इत्यनेनापूर्वोऽपि स्वीक्रियते यथा-**स्वर्देवेषु**[3]। **क्व** । **न्यंक्** इत्यादयः । ऋक्प्रातिशाख्येऽप्युक्तम् -**अतोन्यत् स्वरितं स्वारं जात्यमाचक्षते पदे**[4] समान एवार्थः। कन्याशब्दे ककारोत्तरवर्त्यकारोऽनुदात्तः, तस्मात् परवर्ती यकारसंयुक्तः स्वरितः स्वरस्तस्य जात्यसंज्ञा भवति ।

**पाणिनीयशास्त्रम्**- पाणिनीयशास्त्रे स्वरितस्य जात्यादिसंज्ञया न कुत्रापि व्यवहारः दृश्यते, किञ्चोदाहरणानि तु भवन्त्येव । जात्यस्वरविषये यथा-**कार्यम्। हार्यम् । चिकीर्ष्यम्।** इत्यादीन्युदाहरणानि।

कार्यम्' धार्यम्। इत्यत्र कृधातोः **ऋहलोर्ण्यत्**[5] इत्यनेन ण्यत् प्रत्ययः क्रियते। ण्यत्प्रत्ययस्य तित्त्वात् **'तित्स्वरितम्'**[6] इत्यनेन सूत्रेण प्रत्ययस्य स्वरितस्वरो विधीयते। अयं च स्वर आद्युदात्तस्वरस्यापवादभूतः। यतोहि प्रत्ययस्याद्युदात्तस्वरविधायकं सूत्रं वर्तते **'आद्युदात्तश्च'**[7] इति तस्मादयमपवादः। एकस्मिन् पदे एकस्वरितो भवति वोदात्तस्तस्मादन्येऽनुदात्ता भवन्तीति कृत्वादावनुदात्तस्वर उभयत्रापि। तस्मात् परवर्ती यो यकारेण युक्तः स्वरितस्वरः स एव जात्यसंज्ञया व्यवह्रियते प्रातिशाख्यग्रन्थैः।

**अभिनिहितस्वरः**-अभिनिहितस्वरितविषयो विचार्यतेऽत्र।

यस्मिन् पदे एकारौकाराभ्यामुदात्ताभ्यामनुदात्तोऽकारो लुप्यते तत्राभिनिहितस्वरो भवति प्रातिशाख्यग्रन्थेषु । यथोक्तम् -**एदोद्भ्यामकारो लुगभिनिहितः**[8]। उदाहरणम् -

एकारस्य भवति यथा-**ते-अप्सरसाम् = तेऽप्सरसाम्।**

ओकारस्य भवति यथा-**वेदः -असि = वेदोऽसि ।**

अत्र पूर्वपदस्यान्तिमोऽजुदात्तः, तस्मात् पदवर्त्यकारोऽनुदात्तः। तस्याकास्य लोपत्वात्

1. पा. प्रा. 1/111
2. वा. सं. 17/97, 1/20
3. पा. सं. 18/64
4. ऋ. प्रा. 3/8
5. पा. अ. 3/1/125
6. पा.अ. 6/1/179
7. पा.अ. 6/1/179
8. वा. प्रा. 1/113

अर्थात् पूर्वसर्वणसन्धिमाध्यमेनादृश्यमानत्वाद्यः स्वरो जायते सोऽभिनिहितसंज्ञको भवति।

ऋक्प्रातिशाख्ये पूर्वरूपसन्धिरभिनिहितसंज्ञया व्यवह्रियते । अस्मिन् सन्धौ परवर्त्यकारः पादादौ यदि स्यात् तदैवाभिनिहितसन्धिं प्राप्नोति । तत्रोक्तम्-

**अथाभिनिहितः संधिरेतैः प्राकृतवैकृतैः ।**
**एकीभवति पादादिरकारस्तेऽत्र संधिजाः ॥**[1]

शाकल्यस्याचार्यस्य मतेऽस्याभिनिहितसंज्ञकसन्धौ य उदात्तपूर्वोऽनुदात्तश्च परस्तस्यैकरूपे प्राप्ते यो विशिष्टो रूपः (ए, ओ इत्यनेन) स स्वरितो भवति। यथोक्तं प्रातिशाख्ये-

**इकारयोश्च प्रश्लेषे क्षैप्राभिनिहितेषु च ।**
**उदात्तपूर्वरूपेषु शाकल्यस्यैवमाचरेत् ॥**[2]

उदाहरणम् - **ते-अवर्धन्त = तेऽवर्धन्त**।[3]

**पाणिनीयमतम्**-पाणिनीयव्याकरणेऽप्येतादृशी स्वरव्यवस्था न दृश्यते। तत्रास्मिन् विषये **'स्वरितो वानुदात्ते पदादौ'**[4] इति सूत्रं वर्तते। अस्य भावार्थो भवति यद्-यत्रानुदात्ते पदादौ परे उदात्तेन सहैकादेशस्तत्र स्वरितो भवति। उदात्तेन सहानुदास्यैकादेशे पूर्वसूत्रेण -**एकादेश उदात्तेनोदात्तः**'[5] इत्यनेनोदात्ते प्राप्तेऽनेन पदादावनुदात्ते परे विकल्पेन स्वरितादेशो विधीयते। यथा-**वसुकः असि = वसुकोंऽसि। तेंऽवदन्**। अत्र 'एङः पदान्तादति' इत्यनेन पूर्वरूपैकादेशः ।

**क्षैप्रस्वरः** -क्षैप्रसंज्ञाविधायकं सूत्रं वर्तते -**युवर्णौ यवौ क्षैप्रः**[6]। यत्रानुदात्ते स्वरे परे उदात्ताविवर्णोवर्णौ यथासंख्यं यकारवकाराभ्यां युक्तौ भवतस्तत्र क्षैप्रसंज्ञकस्वरितो भवति। ऋक्प्रातिशाख्यानुसारं क्षैप्र इति सन्धेर्नाम यस्मिन् स्वरवर्णपरेभूतेष्वकण्ठ्याविकारोकारौ क्रमशो यकारवकाराभ्यां युक्तौ भवतस्तत्र **क्षैप्र** इति संज्ञा भवति। अत्र परवर्ती स्वरः पदादौ, पूर्वश्च पदान्ते यदि स्यात् तदा क्षैप्रसन्धिर्भवति। क्षैप्रसन्धौ पूर्ववर्तिस्वर उदात्तः परवर्तिस्वरश्चानुदात्तः, अस्यामवस्थायां युवर्णौ क्रमशो यवौ भवतस्तदा तस्य स्वरितस्वरो भवति शाकल्यस्याचार्यस्य मते । तैत्तिरीयमतेऽपि तद्वदेव हि स्पष्टम्- **इवर्णोकारयोर्वकारश्रावे क्षैप्र उदात्तयोः**[7]। एवमथर्वप्रातिशाख्ये-**अन्तः स्थापत्तावुदात्तस्यानुदात्ते क्षैप्रः**[8]। सर्वत्र समरूपं दृश्यते । क्षैप्रसंज्ञकस्वरितानामुदाहरणनि -

---

1. ऋ.प्रा. 2/34
2. ऋ.प्रा. 2/13
3. ऋ.सं. 1/85/7
4. पा.अ. 8/2/6
5. पा.अ. 8/2/5
6. वा.प्रा. 1/115
7. तै.प्रा. 20/1
8. अ.प्रा. 3/3/14

(1) जात्यस्वरितः, (2) अभिनिहितस्वरितः, (3) क्षैप्रस्वरितः, (4) प्रश्लिष्टस्वरितः, (5) तैरोव्यञ्जनस्वरितः, (6) तैरोविरामस्वरितः, (7) पादवृत्तस्वरितः एवं (8) ताथाभाव्यस्वरितश्चेति। तेषां लक्षणपरिष्कारे सर्वप्रथमं जात्यसंज्ञकस्वरितो विचार्यते।

**जात्यस्वरः**-वाजसनेयिप्रातिशाख्यग्रन्थे जात्यसंज्ञाविधायकं सूत्रं वर्तते-**"एकपदे नीचपूर्वः सयवो जात्यः"**[1] भावार्थो यथा- एकस्मिन् पदेऽनुदात्तपूर्वो यो यकारेण वकारेण वा सहितः स्वरितः स्वरः स जात्यसंज्ञको भवति यथा-**कन्या**। **धान्यमसि**[2]। अत्र नीचपूर्व इत्यनेनापूर्वोऽपि स्वीक्रियते यथा-**स्वर्देवेषु**[3]। **क्व** । **न्यक्** इत्यादयः । ऋक्प्रातिशाख्येऽप्युक्तम् -**अतोन्यत् स्वरितं स्वारं जात्यमाचक्षते पदे**[4] समान एवार्थः। कन्याशब्दे ककारोत्तरवर्त्यकारोऽनुदात्तः, तस्मात् परवर्ती यकारसंयुक्तः स्वरितः स्वरस्तस्य जात्यसंज्ञा भवति ।

**पाणिनीयशास्त्रम्**- पाणिनीयशास्त्रे स्वरितस्य जात्यादिसंज्ञया न कुत्रापि व्यवहारः दृश्यते, किञ्चोदाहरणानि तु भवन्त्येव । जात्यस्वरविषये यथा-**कार्यम्**। **हार्यम्** । **चिकीर्ष्यम्**। इत्यादीन्युदाहरणानि।

कार्यम्' धार्यम्। इत्यत्र कृधातोः **ऋहलोर्ण्यत्**[5] इत्यनेन ण्यत् प्रत्ययः क्रियते। ण्यत्प्रत्ययस्य तित्त्वात् **'तित्स्वरितम्'**[6] इत्यनेन सूत्रेण प्रत्ययस्य स्वरितस्वरो विधीयते। अयं च स्वर आद्युदात्तस्वरस्यापवादभूतः। यतोहि प्रत्ययस्याद्युदात्तस्वरविधायकं सूत्रं वर्तते **'आद्युदात्तश्च'**[7] इति तस्मादयमपवादः। एकस्मिन् पदे एकस्वरितो भवति वोदात्तस्तस्मादन्येऽनुदात्ता भवन्तीति कृत्वादावनुदात्तस्वर उभयत्रापि। तस्मात् परवर्ती यो यकारेण युक्तः स्वरितस्वरः स एव जात्यसंज्ञया व्यवह्रियते प्रातिशाख्यग्रन्थैः।

**अभिनिहितस्वरः**-अभिनिहितस्वरितविषयो विचार्यतेऽत्र।

यस्मिन् पदे एकारौकाराभ्यामुदात्ताभ्यामनुदात्तोऽकारो लुप्यते तत्राभिनिहितस्वरो भवति प्रातिशाख्यग्रन्थेषु । यथोक्तम् -**एदोद्भ्यामकारो लुगभिनिहितः**[8]। उदाहरणम् -

एकारस्य भवति यथा-**ते**-**अप्सरसाम्** = **तेंऽप्सरसाम्**।

ओकारस्य भवति यथा-**वेदः** -**असि** = **वेदोंऽसि** ।

अत्र पूर्वपदस्यान्तिमोऽजुदात्तः, तस्मात् पदवर्त्यकारोऽनुदात्तः। तस्याकास्य लोपत्वात्

---

1. पा. प्रा. 1/111
2. वा. सं. 17/97, 1/20
3. पा. सं. 18/64
4. ऋ. प्रा. 3/8
5. पा. अ. 3/1/125
6. पा.अ. 6/1/179
7. पा.अ. 6/1/179
8. वा. प्रा. 1/113

अर्थात् पूर्वसर्वणसन्धिमाध्यमेनादृश्यमानत्वाद्यः स्वरो जायते सोऽभिनिहितसंज्ञको भवति।

ऋक्प्रातिशाख्ये पूर्वरूपसन्धिरभिनिहितसंज्ञया व्यवह्रियते । अस्मिन् सन्धौ परवर्त्यकारः पादादौ यदि स्यात् तदैवाभिनिहितसन्धिं प्राप्नोति । तत्रोक्तम्-

**अथाभिनिहितः संधिरेतैः प्राकृतवैकृतैः ।**
**एकीभवति पादादिरकारस्तेऽत्र संधिजाः ।।**[1]

शाकल्यस्याचार्यस्य मतेऽस्याभिनिहितसंज्ञकसन्धौ य उदात्तपूर्वोऽनुदात्तश्च परस्तस्यैकरूपे प्राप्ते यो विशिष्टो रूपः (ए, ओ इत्यनेन) स स्वरितो भवति। यथोक्तं प्रातिशाख्ये-

**इकारयोश्च प्रश्लेषे क्षैप्राभिनिहितेषु च ।**
**उदात्तपूर्वरूपेषु शाकल्यस्यैवमाचरेत् ।।**[2]

उदाहरणम् - **ते-अवर्धन्त = तेऽवर्धन्त**।[3]

**पाणिनीयमतम्**-पाणिनीयव्याकरणेऽप्येतादृशी स्वरव्यवस्था न दृश्यते। तत्रास्मिन् विषये **'स्वरितो वानुदात्ते पदादौ'**[4] इति सूत्रं वर्तते। अस्य भावार्थो भवति यद्-यत्रानुदात्ते पदादौ परे उदात्तेन सहैकादेशस्तत्र स्वरितो भवति। उदात्तेन सहानुदास्यैकादेशे पूर्वसूत्रेण **-एकादेश उदात्तेनोदात्तः**'[5] इत्यनेनोदात्ते प्राप्तेऽनेन पदादावनुदात्ते परे विकल्पेन स्वरितादेशो विधीयते। यथा-**वसुकः असि = वसुकोंऽसि। तेंऽवदन्**। अत्र 'एङः पदान्तादति' इत्यनेन पूर्वरूपैकादेशः ।

**क्षैप्रस्वरः** -क्षैप्रसंज्ञाविधायकं सूत्रं वर्तते -**युवर्णौ यवौ क्षैप्रः**[6]। यत्रानुदात्ते स्वरे परे उदात्ताविवर्णोवर्णौ यथासंख्यं यकारवकाराभ्यां युक्तौ भवतस्तत्र क्षैप्रसंज्ञकस्वरितो भवति। ऋक्प्रातिशाख्यानुसारं क्षैप्र इति सन्धेर्नाम यस्मिन् स्वरवर्णपरेभूतेष्वकण्ठ्याविकारोकारौ क्रमशो यकारवकाराभ्यां युक्तौ भवतस्तत्र **क्षैप्र** इति संज्ञा भवति। अत्र परवर्ती स्वरः पदादौ, पूर्वश्च पदान्ते यदि स्यात् तदा क्षैप्रसन्धिर्भवति। क्षैप्रसन्धौ पूर्ववर्तिस्वर उदात्तः परवर्तिस्वरश्चानुदात्तः, अस्यामवस्थायां युवर्णौ क्रमशो यवौ भवतस्तदा तस्य स्वरितस्वरो भवति शाकल्यस्याचार्यस्य मते । तैत्तिरीयमतेऽपि तद्वदेव हि स्पष्टम्- **इवर्णोकारयोर्वकारश्रावे क्षैप्र उदात्तयोः**[7]। एवमथर्वप्रातिशाख्ये-**अन्तः स्थापत्तावुदात्तस्यानुदात्ते क्षैप्रः**[8]। सर्वत्र समरूपं दृश्यते । क्षैप्रसंज्ञकस्वरितानामुदाहरणनि -

---

1. ऋ.प्रा. 2/34
2. ऋ.प्रा. 2/13
3. ऋ.सं. 1/85/7
4. पा.अ. 8/2/6
5. पा.अ. 8/2/5
6. वा.प्रा. 1/115
7. तै.प्रा. 20/1
8. अ.प्रा. 3/3/14

इवर्णस्य यथा-**त्रि-अम्बकम्=त्र्यम्बकम्** ।

उवर्णस्य यथा- **द्रु अन्न =द्रूवन्नः** ।

**पाणिनीयम्**-पाणिनीयशास्त्रेऽपि क्षैप्रसंज्ञकस्वरितस्य विधायकं सूत्रं वर्तते -**उदात्तस्वरितयोर्यणः स्वरितोनुदात्तस्य**"[1] अर्थः- उदात्तस्य स्थाने यो यण् , स्वरितस्य स्थाने यो यण् ततः परस्यानुदात्तस्य स्वरितादेशो भवति।

अयं क्षैप्रसंज्ञकस्वरस्तूदात्तयण्विषयकस्तस्मात् सिद्धं हि तत्। तत्रत्योदाहरणम् -

**कुमार्यौ । कुमार्यः । अनुदात्तस्य च यत्रोदात्तलोपः**, इत्यनेनोदात्तनिवृत्ति-स्वरेणायमीकार उदात्तः, तस्य स्थाने यणादेशः स उदात्तयण्, तस्मात् परस्यानुदात्तस्य स्वरित आदेशो भवति । प्रातिशाख्यवदत्र न पदान्ते पदादौ चेति नियमः। तस्मात् पदमध्येऽप्युदाहरणं दृश्यते ।

**प्रश्लिष्टस्वरः** -प्रश्लिष्टमिति नाम्नैव सुस्पष्टम् अर्थाद्यत्र परस्परप्रश्लेषो भवति। पाणिनीयभाषायां यत्र दीर्घसन्धिः, गुणसन्धिः, वृद्धिरित्यादिसन्धिर्भवतीति यावत्। तत्र ऋक्प्रातिशाख्ये एतेषां सन्धिविषयाणां प्रश्लिष्टमिति संज्ञया व्यवहारः। तत्रोदात्तस्येकार-स्यानुदात्तस्येकारस्य प्रश्लेषे अर्थात् दीर्घे कृते सति यः स्वरो निष्पद्यते स प्रश्लिष्टस्वरितस्वर इति । उक्तं च -**इवर्ण उभयतो ह्रस्वः प्रश्लिष्टः**।[2] ऋक्प्रातिशाख्येऽपि **इकारयोश्च प्रश्लेषे......**[3] इत्यनया कारिकया प्रश्लिष्टस्वरोऽस्मिन्नेवार्थेऽभिहितः। एवमेवाथर्वप्रातिशाख्ये च-**इकारयोश्च प्रश्लिष्टः**। इत्यनेन प्रतिपादितः ।

**पाणिनीयसूत्रम्- स्वरितो वानुदात्ते पदादौ**[4] इत्यनेनैव सूत्रेण भवत्येकादेशविषयत्वात्। यथाभिनिहितस्वरविषये नियमो दृश्यते तद्वदेवात्रापि। तद्यथा **सु उत्थितः = सूत्थितः**। इत्यत्रादौ पदान्ते उदात्तवर्णो ह्रस्वेकारो वर्तते, पदादौ चानुदात्तः परवर्ती ह्रस्वोकारः, तस्मात् अनयोर्दीर्घसन्धिकृते सति स्वरितस्वरो निष्पद्यते। यस्य प्रातिशाख्यग्रन्थे प्रश्लिष्टसंज्ञया व्यवहारः।

**तैरोव्यञ्जनस्वरः**-यत्रोदात्तात् परो यो व्यञ्जनयुतः स्वरितस्वरः स तैरोव्यञ्जनसंज्ञको भवति । उक्तं च -**स्वरो व्यञ्जनयुतस्तैरोव्यञ्जनः**[5]। अयं तु तिङन्तपदेषु वा कृदन्तपदेषु बहुधा दृश्यते सामान्यनियमत्वात् यथा -**इडे । रन्ते । हव्ये । काम्ये । चन्द्रे । ज्योते**।[6] इत्यादीन्यनेकानि पदानि भवन्ति । ऋक्प्रातिशाख्यमतेऽस्मिन् विषय उक्तम् -

1. पा.अ. 8/2/4
2. वा.प्रा. 1/116
3. ऋ.प्रा. 3/13
4. पा.अ. 8/2/6
5. वा.प्रा. 1/117
6. वा. सं. 8/43

**उदात्तपूर्वं नियतं विवृत्या व्यञ्जनेन वा ।**
**स्वर्यन्तेऽन्तर्हितं न चेदुदात्तस्वरितोदयम् ।।**[1]

अर्थात् – उदात्तपूर्वं नियतम्= अनुदात्तमक्षरं व्यञ्जनेन व्यवहितमपि स्वरितं भवति। तस्य स्वरितस्य च तैरोव्यञ्जनसंज्ञा भवति। यथा –

**वैवृत्ततैरोव्यञ्जनौ क्षैप्राभिनिहितौ च तान्।**
**प्रश्लिष्टं च यथासन्धि स्वरानाचक्षते पृथक्।।**[2]

एतेषां समस्तानां सन्धियुक्तस्वराणां क्रमशो यथासन्धि स्वरसंज्ञा भवति। तद्यथा क्षिप्रसन्धौ भव क्षैप्र इत्यादिप्रकारेण जानीयुः।

अस्मिन् स्वरितविषये इदमवधेयं यत् –उदात्ते स्वरिते वा परे सति –उदात्तात् परस्यानुदात्तस्य स्वरितविधानं न भवति। यथा –**ज्या इयं समने पारयन्ति।** अत्र ज्या इत्यस्योदात्ते परवर्तीकारस्य स्वरितप्रसङ्गे तस्योदात्तपरकत्वात् निषेधो भवति। तस्मात् तस्यानुदात्त एव स्वरः।

पाणिनीयमतेऽपि प्रातिशाख्यवदनेकेषु स्थलेषु तैरोव्यञ्जनस्वरो दरीदृश्यते । उदाहरणानि चानेकविधानि। विशेषत आद्युदात्तपदेषु कृदन्तेषु तिङन्तेषु वा। यथा-**क्षयः। जयः। जुष्टः। ददाति। जहाति।** इत्यादीनि। किञ्जास्य स्वरस्य तैरोव्यञ्जनसंज्ञा पाणिनीयग्रन्थे न विहिता।

**तैरोविरामः**– सावग्रहसंज्ञकपदे पूर्वपदस्यान्तिमोऽजुदात्तश्चेत् तैरोविरामसंज्ञकस्वरो (स्वरितः) निष्पद्यते । अयं च पदकाले समस्तपदेष्वेव दृश्यते । यत्रेति करणद्वारा पदस्य पुनरुक्तिस्तत्र तस्य पदस्य सावग्रहसंज्ञा भवति । तस्मिन् यः पूर्वो भागस्तस्यावग्रह इति संज्ञा भवति । अस्यां दशायां यदि पूर्वस्यान्तिमोऽज्यद्युदात्तस्तर्हि तस्मात् परवर्ति यदक्षरं तस्य तैरोविरामसंज्ञकस्वरितो भवति । यथा **गोपतौ** इति समस्तपदं तस्य सावग्रहे भवति **–गोपताविति गो–पतौ। यज्ञपतिमिति यज्ञ–पतिम्।**[3]

अत्र पदस्य द्विरुक्तौ **'पदावृत्तौ चान्तरेण'**[4] इत्यनेन सूत्रेण इति करणं भवति ।

तैरोविरामस्वरितस्वरविषये वाजसनेयिप्रातिशाख्य एव चर्चा विधीयते । अन्यप्रातिशाख्ये न तथा । अयं च स्वरः पदपाठकाल एव विशेषतः समस्तपद इति । पाणिनीयशास्त्रेऽपि न तथा दृश्यते ।

---

1. ऋ.प्रा. 3/17
2. ऋ.प्रा. 3/17, 18
3. वा.सं. 1/1, 6/11
4. वा.प्रा. 4/20

**पादवृत्तस्वरः**- **''विवृत्तिलक्षणः पादवृत्तः''**[1] इत्यनेन सूत्रेण विवृत्या लक्षितस्य स्वरस्य पादवृत्त इति संज्ञा विधीयते। यत्र द्वयोः स्वरयोर्मध्ये सन्ध्यभावस्तत्र तयोर्मध्ये योऽनन्तरः व्यवधानयुक्तः कालः सः शास्त्रेषु विवृत्तिरिति संज्ञया व्यवह्रियते। उक्तं च-

**द्वयोस्तु स्वरयोर्मध्ये सन्धिर्यत्र न दृश्यते।**
**विवृत्तिस्तत्र कर्तव्य यऽईतेति निदर्शनम्॥**[2]

अस्यां विवृत्तौ पूर्वभागस्योदात्तस्वरात् परवर्ती यः स्वरितः स्वरस्तस्य पादवृत्त इति संज्ञा भवति। तैत्तिरीयप्रातिशाख्येऽपि **'पदविवृत्यां पादवृत्तः'**[3] इत्युक्तम्। तत्रैव भाष्यकार आह -**स्वरयोरसन्धिर्विवृत्तिः**[4]। अस्याः पदमध्यवर्तिन्या विवृत्तेरुपरि यस्स्वरितः, स खलु पादवृत्तो भवति। यथा - **ताऽअस्मात्** । **सऽधानः**[5]। अथर्वप्रातिशाख्येऽपि तद्वदेव समानम् ।

**ताथाभाव्यस्वरः**-सावग्रहपदस्य पूर्वपदस्यान्तिमे स्थितो योऽनुदात्तः, यस्मात् पूर्ववर्तिवर्ण उदात्तः पश्चाच्चोदात्तः, एवं सति यः स्वरितस्वरो निष्पद्यते स ताथाभाव्य इति ज्ञायते । तथा ह्युक्तम् -**उदाद्यन्तो न्यवग्रहस्ताथाभाव्यः**[6]

यथोदाहरणम्-**तनूनप्त्र इति तनू-नप्त्रे । तनूनपादिति तनू- नपात्**[7] अयं च स्वरः स्वरितानां मध्ये पठ्यते । किञ्चैतादृशः स्वरितो माध्यन्दिनानां नोपलभ्यते । यतो हि **निहितमुदात्तस्वरितपरम्**[8] इत्यनेन उदात्तपरं स्वरितपरं च स्वरितं निहन्यते । तस्मादस्यां स्थितावनुदात्त एव सर्वदा भवति । अतो माध्यन्दिनानां पदकाले ताथाभाव्यसंज्ञकः कम्पो भवति, न तु स्वरितस्वरः । अस्मिन् मते माध्यन्दिनमतानुसारिभिरौज्जिहायनकेरुक्तम्-

**अवग्रहो यदा नीच उच्चयोर्मध्यतः क्वचित् ।**
**ताथाभाव्यो भवेत्कम्पस्तनूनप्त्रे निदर्शनम्॥**[9]

वाजसनेयिप्रातिशाख्ये स्वरितानां मध्येऽस्य पाठस्त्वन्येषामाचार्याणां मतेनेत्यवधेयम् ।

तेषां मतेऽयं तनूशब्दः संहितावन्न भवति । अतोऽसौ स्वरित इति । **अनवग्रहे**

---

1. वा. प्रा. 1/119
2. या.शि.उ.श्लो. 8
3. तै.प्रा. 20/6
4. तै.प्रा.वै.भा. 2./6
5. तै.सं. 2/1/2, 4/4/4
6. वा.प्रा. 1/120
7. वा.सं. 5/5, 21/13
8. वा.प्रा. 4/138
9. वा.प्रा.उ.भा. 1/120

इत्यनेन सूत्रेण अनवग्रहे एव स्वरितस्य निषेधो भवति न त्ववग्रहे । तस्मात् पदविषये तु ताथाभाव्यस्वरितो भवति । निषेधस्तु संहिताविषय एवेति ।

**कूटाक्षरबोधिका**

| | |
|---|---|
| अथ.सं. | अथर्वेदसंहिता |
| अथ. प्रा. | अथर्वप्रातिशाख्यम् |
| आ.शि. | आपिशलिशिक्षा |
| ऋ.सं. | ऋग्वेदसंहिता |
| ऋ.प्रा. | ऋक्प्रातिशाख्यम् |
| ऋ.प्रा.उ.भा. | ऋक्प्रातिशाख्ये उव्वटभाष्यम् |
| का.वृ. | काशिकावृत्तिः |
| का.न्या. | काशिकाया न्यासटीका |
| का.प. | काशिकाया:पदमञ्जरी |
| तै.सं. | तैत्तिरीयसंहिता |
| तै.प्रा. | तैत्तिरीयप्रातिशाख्यम् |
| तै.प्रा.त्रि. | तैत्तिरीयप्रातिशाख्ये त्रिरत्नभाष्यम् |
| तै.प्रा.वै.भा. | तैत्तिरीयप्रातिशाख्यस्य वैदिकाभरणभाष्यम् |
| ना.शि. | नारदीया शिक्षा |
| पा.अ. | पाणिनीयाष्टाध्यायीसूत्रम |
| पा.शि. | पाणिनीयशिक्षा |
| म.भा. | महाभाष्यम् |
| या.शि.श्लो. | याज्ञवल्क्यशिक्षा श्लोकसंख्या |
| वा.सं. | वाजसनेयिसंहिता (माध्यन्दिनीयसंहिता) |
| वा.प्रा. | वाजसनेयिप्रातिशाख्यम् |
| वा.प्रा.उ.भा. | वाजसनेयिप्रातिशाख्ये उव्वटभाष्यम् |
| वै.सि.कौ.सं.प्र. | वैयाकरणसिद्धान्तकौमुद्यां संज्ञाप्रकरणम् |
| वै.स्व.मी.पृ. | वैदिकस्वरमीमांसा पृष्ठसंख्या |

UGC - CARE Listed
जनवरी–मार्च, 2021

शोधप्रभा
वर्ष : 46, प्रथमोऽङ्कः

# लोकमान्यालङ्कारस्य परिचयः

डा. रत्नमोहनझाः *

अस्मद्देशे सारस्वतसाधनायां काव्याङ्गभूतस्य अलङ्कारतत्त्वस्य अस्ति सुमहती परम्परा। सा च परम्परा वेदकालात् निरन्तरम् अनुवर्तमाना वर्तते। विश्वस्मिन् विश्वे सर्वाधिक-प्राचीनग्रन्थत्वेन सर्वजनस्वीकृतः वर्तते ऋग्वेदः। वेदेषु काव्यपदस्य प्रयोगः प्राप्यते– **''देवस्य पश्य काव्यं न ममार न जीर्यति''**।[1] अत्र देवकाव्यत्वेन वेदस्योल्लेखः विद्यते। काव्यसौन्दर्यविषयकाः गुणरीत्यलङ्कारध्वन्यादयः सर्वेऽपि विषयाः विशेषरूपेण वेदाङ्गेषु प्राप्यन्ते। तत्रापि अलङ्कारविषये प्रभूतं विस्तृतञ्च विवेचनं समुपलभ्यते वैदिकसाहित्ये। अधोलिखिते एकस्मिन्नेव मन्त्रे उपमारूपकालङ्कारयोः मनोरमं निरूपणं विद्यते–

**उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम्।**
**उतो त्वस्मै तन्वं विसस्रे जायेव पत्ये उशती सुवासाः॥**[2]

तथैव उत्प्रेक्षायाः अपि सुन्दरम् उदाहरणं प्राप्यते–

**द्वा सुपर्णा सयुजा सखायः समानं वृक्षं परिषस्वजाते।**
**तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकषीति॥**[3]

यास्काचार्यः निरुक्ते उपमालङ्कारं विस्तरेण विवृण्वन् उपमायाः लक्षणं प्रस्तौति –
**''यद् अतत् तत्सदृशं तदासां कर्मेति गार्ग्यः''।**
**ज्यायसा वा गुणेन प्रख्याततमेन वा कनीयांसं वा अप्रख्यातं वा उपमीयते।''**[4]

निरूक्तकारेण उपमायाः केचन भेदाः अपि उल्लिखिताः। तेषु **कर्मोपमा, भूतोपमा, रूपोपमा, सिद्धोपमा, लुप्तोपमा** च वर्तन्ते।[5]

---

* सहायकाचार्यः, दूरस्थशिक्षा, केन्द्रीयसंस्कृतविश्वविद्यालयः, नवदेहली

1. ऋग्वेदः – १०/८/३२
2. तत्रैव – १०/११/०४
3. तत्रैव – ०१/१६४/२०
4. निरुक्तम् – ३/३
5. तत्रैव – ३/३

व्याकरणशास्त्रेऽपि उपमायाः महती विवेचना प्राप्यते। उपमालङ्कारस्य कृते अपेक्षितानि तत्त्वानि भवन्ति-उपमानम्, उपमेयः, साधारणधर्मः सादृश्यवाचकशब्दाश्च। एषामुल्लेखः पाणिनिसूत्रेषु स्पष्टतया दृश्यते-

**''उपमानानि सामान्यवचने।''**[1]

**''उपमितं व्याघ्रादिभिः सामान्याप्रयोगे।''**[2]

**''तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम्।''**[3]

श्रौती-आर्थी-उपमयोः भेदाधारः पाणिनीयसूत्रमेवाऽस्ति। **''तेन तुल्यं क्रिया चेद्वति''**[4], **''तत्र तस्येव''**[5], **''उपमानादाचारे''**[6], **''कर्तुः क्यङ् सलोपश्च''**[7], **''उपमाने कर्मणि च''**[8] इत्यादीनि सूत्राणि अपि उपमाविषये एव प्रवृत्तानि दृश्यन्ते। अनेन अतीव सुस्पष्टं यदलङ्काराणां मूलतत्त्वानि वेद-वेदाङ्गकालादेव प्राप्यन्ते। परन्तु अलङ्कारशास्त्रीयतत्त्वानां सुव्यवस्थितं विवेचनं भरताचार्यादारभ्य विश्वेश्वरपाण्डेयं यावत् द्विसहस्रवर्षेषु अनुस्यूततया सञ्जातम्। तदनु अलङ्कारशास्त्रीयेयं धारा वर्तमानकाले पं. रेवाप्रसादद्विवेदाभिराजराजेन्द्रमिश्र - त्रिपाठिराधावल्लभ - बटोहीझा - रामलखनपाण्डेय - रामकुमारशर्म - रमाकान्तपाण्डेयानां माध्यमेन परिपुष्टतां समवाप्नोति।

अस्मिन् निबन्धे श्रीमतां पुरतः लोकविस्मृतम् एकम् उपेक्षितं किन्तु अतीव महत्त्वभूतं अलङ्कारग्रन्थम् उपस्थापयितुमुत्सहे। ग्रन्थरत्नस्यास्य नाम वर्तते- 'लोकमान्यालङ्कारः'। अस्य प्रणेता विद्यते पं. गजाननरामचन्द्रकरमलकरः। करमलकरमहोदयस्य मूलस्थानं महाराष्ट्रराज्यस्य रत्नागिरिमण्डलस्य राजापुरनामाख्यं नगरं वर्तते। ततः गणेशमन्दिरस्य अर्चकरूपेण दामोदरभट्टनामकः कश्चन इन्दौरनगरं समायातः। भारद्वाजगोत्रोत्पन्नस्यास्य पौत्रः रामचन्द्र उपाध्यायः पौत्रवधू च जानकी देवी आस्ताम्। अनयोः पुत्रः गजाननशास्त्री महानालङ्कारिकः अभूत्। गजाननवर्यः 1952 तमे वैक्रमाब्दे भाद्रमासे कृष्णपक्षे अष्टम्यां तिथौ इन्दौरनगरे जनिम् अलभत। स च चैत्रकृष्णचतुर्दश्यां 2032 तमे वैक्रमाब्दे देवसायुज्यं प्राप्नोत्। तस्य द्वौ पुत्रौ एका पुत्री च वर्तन्ते।

गजाननः प्रारम्भिकशिक्षां स्वकीयपितृपादात् रामचन्द्रमहोदयात् प्राप्नोत्। पौरोहित्यं तस्य कौलिकपरम्परा। तस्या विद्यायायां नैपुण्यादिन्दौरनगरे करमलकरकुलस्य सुमहती प्रतिष्ठा चासीत्। पौरोहित्यकर्मणि तस्य आजीविका अपि सुनिश्चिता आसीत्। परन्तु तत्सर्वं

---

1. पा. अ.- २/१/५५
2. तत्रैव - २/१/५६
3. तत्रैव - २/१/७१
4. तत्रैव - ५/१/११५
5. तत्रैव - ५/१/११६
6. तत्रैव - ३/१/१०
7. तत्रैव - ३/१/११
8. तत्रैव - ३/४/४५

परित्यज्य स उच्चशिक्षामवाप्तुम् इन्दौरस्थं संस्कृतमहाविद्यालये प्राविशत्। तत्र काव्यशास्त्रं साङ्ख्ययोगं वेदान्तशास्त्रं च अपठत्। पुनश्च कलिकातानगरं गत्वा काव्यतीर्थस्य उपाधिं प्राप्नोत्। सौभाग्यं नाम इन्दौरस्थे यस्मिन् महाविद्यालये तेन अध्ययनं विहितं तस्मिन्नेव महाविद्यालये प्राध्यापकत्वेन नियुक्तिरपि प्राप्ता। तत्र द्वात्रिंशद्वर्षाणि यावत् अध्यापनमकरोत्। तत्र बहून् शिष्यान् सुयोग्यानकरोत्। तदनु चत्वारि वर्षाणि यावत् श्वेताम्बरजैनमुनीन् संस्कृतमध्यापयत्। तस्मिन् सन्दर्भे सः देशदेशान्तरस्य पदयात्राम् अकरोत्।

पण्डितगजाननशास्त्री यद्यपि बहुभाषाज्ञः आसीत् तथापि सः संस्कृतेनैव भाषते स्म। सः संस्कृतसाहित्यसम्मेलनेषु बहुधा सदस्यत्वेन दायित्वं निरवहत्। पण्डितवर्यः वृत्त्या साङ्ख्ययोगस्याध्यापकः आसीत् परन्तु संस्कृतसाहित्ये अपि स अतीव रुचिमान् आसीत्। महान् राजनेता लोकमान्यतिलकः तस्य आराध्यदैवतमासीत्। अतएव तिलकमहाशयस्य चरितमाधृत्य जयदेवप्रणीते चन्द्रालोके निरूपितैरलङ्कारै सह समायोजनं विधाय नवीनं विलक्षणं च ग्रन्थं व्यरचयत्। तस्य नामकरणमपि तिलकनाम्ना एव अकरोत्– ''लोकमान्यालङ्कारः'' इति। पण्डितगजाननशास्त्रिवर्यस्य अपरा रचना वर्तते –''पद्यपद्माकरः''। तत्र अनेकाः स्फुटरचनाः वर्तन्ते। तासु देवतानां स्तुतयः, हिन्दुधर्मविषयकाः समाजोत्कर्षविषयकाश्च रचनाः सन्ति। शास्त्रिवर्यः समस्यापूरणे चित्रकाव्यनिर्माणे च सिद्धहस्तः आसीत्। संस्कृतपत्रिकासु तस्य नैकाः रचनाः प्रकाशिताः प्रसिद्धिञ्च गताः।

पितृकुलपरम्परया श्रीमान् गजाननरामचन्द्रकरमलकरः कवित्वं प्राप्नोत्। सः यथा साहित्यनिर्माणे निपुणः आसीत् तथैव सङ्गीतविद्यायां पाककर्मणि काष्ठवस्तुनिर्माणे चापि दक्षः आसीत्। समग्रेऽपि भारते सः पर्यटनं विधाय विभिन्नलोकसंस्कृतिमवगाह्य स्वीयां रचनां पर्यपोषयत्। तस्य पुत्रस्य कवेः भास्करगजाननकरमलकरस्य मतेन सः मनसा साहित्यकारः, हृदयेन रसिकः, स्वभावेन धार्मिकः, हस्ताभ्यां विश्वकर्मा, पदभ्यां पर्यटकः, ज्ञानेन दार्शनिकः, कर्मणा महान् देशभक्तश्चासीत्। गुणानामानन्त्येनैव सः वार्धक्ये अपि तरुणायते स्म। भाषायामधिकारः, कृतौ सहजता, तिलके भक्तिः, राष्ट्रसेवा चास्य विशिष्टगुणाः। लोकमान्यालङ्कारग्रन्थे परिसङ्ख्यालङ्कारस्य निदर्शनसन्दर्भे करमलकरमहोदयस्य मानसमवगन्तुं शक्यते –

**कर्त्तव्यं देशकार्यं न हि पुनरितरद्देशदैन्यावहं यत्**
**साहाय्यं सद्विधेयं विपदि निपतिते बान्धवे स्वे तदर्हे।**
**किं ग्राह्यं वस्तुजातं स्वजनकरकृतं यत्स्वदेशोद्भवं तत्**
**का गर्ह्या राजसेवा न तु पुनरमला लोकसेवेत्यवोचः॥**[1]

आचार्यराधावल्लभत्रिपाठिमहोदयः करमलकरवर्यस्य विषये कथयति–

**''वस्तुतः लक्षणग्रन्थोऽस्य युगानुरूपनूतनोदाहरणसमन्वितः स्मारयति**

1. लोकमान्यालङ्कारः – 109

**पण्डितराजस्येमां सदुक्तिम् - ''किं सेव्यते सुमनसां मनसाऽपिगन्धः कस्तूरिका-जननशक्तिभृतामृगेण''**[1]

विविधैराचार्यैरलङ्काराणाम् अष्टौ गणाः निर्धारिताः। तेषु - (1)सादृश्यमूलकानाम् आद्यगणः (2) विरोधमूलकानां द्वितीयगणः (3) शृङ्खलाबद्धानां तृतीयगणः (4) तर्कन्यायमूलकानां चतुर्थगणः (5) वाक्यन्यायमूलकानां पञ्चमगणः (6) लोकन्यायमूलकानां षष्ठगणः (7) गूढार्थप्रतीतिमूलकानां सप्तमगणः (8)संश्लेषमूलकाष्टमगणश्च। एषु प्रथमगणस्य त्रयः विभागाः वर्तन्ते - (क) भेदाभेदप्रधानाः (ख) अभेदप्रधानाः (ग) गम्यौपम्याश्रयश्च। एतेषां पुनः भेदोपभेदाः भवन्ति।

चन्द्रालोके कुवलयानन्दे च समानरूपेण विवेचितानाम् अलङ्काराणां निरूपणं लोकमान्यालङ्कारे कृतं वर्तते। ग्रन्थेऽस्मिन् गजाननमहाशयस्य अलङ्कारनिरूपण-कौशलं लसतितराम्। परन्तु अतिविस्तरभयादत्र उपर्युक्तेभ्यः अष्टभ्यः गणेभ्यः एकैकः अलङ्कारः उदाहरणत्वेन उपस्थाप्यते।

**1. उपमालङ्कारः**

सादृश्यमूलकोऽयम् उपमालङ्कारः। आचार्येण जयदेवेन उपमालङ्कारस्य लक्षणं निगदितम् -

**''उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोः''**।[2]

अर्थात् यत्र द्वयोः उपमानोपमेययोः सहृदयहृदयाह्लादतया चारु सादृश्यमुद्भूततयोल्लसति। तन्नाम यत्र व्यङ्ग्यमर्यादां विनैव सुस्पष्टं प्रकाशते तत्रोपमालङ्कारः -

**''हृदये खेलतोरुच्चैस्तन्वङ्गीस्तनयोरिव''**[3]

अलङ्कारमेनं स्पष्टीकर्तुम् अप्पयदीक्षितः उदाहरति-

**''हंसीव कृष्ण! ते कीर्तिस्स्वर्गगङ्गामवगाहते''**[4]

उदाहरणेऽस्मिन् उपमालङ्कारस्य निमित्तभूतानि चत्वारि आवश्यकानि तत्त्वानि सन्निविष्टानि सन्ति-

(1)उपमानत्वेन हंसी (2) उपमेयत्वेन कीर्तिः (3) साधारणधर्मत्वेन स्वर्गगङ्गावगा-हनत्वम् (4) सादृश्यवाचकत्वेन च 'इव' इति।

उपर्युक्तलक्षणाधारेण पं. गजाननशास्त्री स्वीये ग्रन्थे लोकमान्यालङ्कारे शार्दूलविक्रीडितच्छन्दसि सुन्दरम् उदाहरणं प्रस्तौति। तच्च-

---

1. गजाननग्रन्थावली - पुरोवाक्
2. कुवलयानन्दः - 5
3. चन्द्रालोकः - 5/11
4. कुवलयानन्दः - 5

कीर्त्या भारत-लोकमान्य इति यो लोके प्रसिद्धिं गतः
निर्विघ्नं निजभक्तकार्यकरणे रात्रिंदिवं तत्परः।
बालः पुण्यपुरे सुवृत्ततिलको गङ्गाधरे भक्तिमान्
पार्वत्याः स सुतो गणाधिप इव प्रेम्णा मया नम्यते॥[1]

पद्येऽस्मिन् गणेशः उपमानं बालगङ्गाधरतिलकश्च उपमेयं वर्तते। उभयोः सादृश्यं कविनाऽनेकैः विशेषणैः प्रतिपादितम्। गणेशः लोकमान्यो विद्यते, लोके सर्वैः पूजितत्वात् तिलकोऽपि लोकमान्य इति विश्रुतः। निजभक्तानां कार्यसम्पादने यथा गणेशः अहर्निशं तत्परो भवति, कदापि ततः पराङ्मुखो न भवति तथैव तिलकोऽपि स्वानुयायिनाम् अभीष्टसाधने रात्रिन्दिवम् अग्रेसरो विद्यते। गणेशः पुण्यपुरे कैलाशे तिलकश्च पुण्याख्ये 'पूना' इति नामके नगरे विलसति। सुवृत्ततिलकः गणेशः स्वपितरि शिवे भक्तिमान् वर्तते तथैव आचारवान् तिलकः स्वजनके गङ्गाधरे भक्तिमान् वर्तते। गिरिजायाः सुतः गणेशः एवञ्च पार्वत्याः सुतः तिलकोऽपि गणप्रमुखत्वात् गणाधिपो विद्यते। स्वगणे तिलकस्य श्रेष्ठत्वात् तस्य गणाधिपत्वमपि सङ्गच्छते।

शास्त्रिवर्यः कथयति यत् यः स्वकीयेन कर्मणा सम्पूर्णेऽपि जगति भारत-लोकमान्य इत्यनेन उपाधिना प्रसिद्धिमवाप्तवान्, यश्च स्वकीयानां भक्तानां निर्विघ्नं कार्यकरणार्थम् अहर्निशं तत्परो भवति यश्च गङ्गाधरनामके स्वस्मिन् पितरि भक्तिमान् अस्ति, सः तिलककुलपदवीसमुपेतः पुण्यपुरे पुण्यपत्तने लब्धजन्मा पार्वत्याः पार्वतीनामिकायाः सदाचारी पुत्रः बालः गणपति इव स्नेहेन मया प्रणम्यते।

उदाहरणेऽस्मिन् उपमानोपमेय-साधर्म्योपमावाचकानां शब्दानाम् अन्वितिः अतीव रमणीयतया युज्यते। उपमीयतेऽनेन-इति उपमानम्। श्लोकेऽस्मिन् उपमानत्वेन वर्तते गणाधिपः शिवपार्वत्योः पुत्रः। उपमातुं योग्यम्-उपमेयम्। तच्च लोकमान्यः बालगङ्गाधरतिलकः। समानः धर्मः सधर्मः। स च उपमानोपमेययोः तिष्ठति तदत्र निर्विघ्नं निजभक्तकार्य-करणम्, अपि च उपमावाचकं पदम् 'इव' इति। एतेषां चतुर्णामपि स्पष्टोल्लेखात् पूर्णोपमाया उदाहरणमिदम्।

अत्र पुण्यपुरम् तिलकपक्षे पुण्यपत्तनं गणेशपक्षे च कैलाशं द्योतयति। एवमेव सुवृत्ततिलकशब्दः बाले विद्यमानं सदाचारं गणेशे च वर्तुलाकारं तिलकं सूचयति। गङ्गाधरः गणेशपक्षे शिवं तिलकपक्षे च गङ्गाधरनामधेयं तस्य पितरं सङ्केतयति। अपि च पार्वती उभयत्र मातृत्वेन राराजते।

एवमत्र कविः लोकमान्यः निजभक्तकार्यकरणं, पुण्यपुरे गङ्गाधरे पार्वत्याः गणाधिप इत्यादिशब्दैः गणेशेन लोकमान्यतिलकस्य साम्यं प्रत्यपादयत्। तच्च श्लेषेणानुप्राणितमिति वैशिष्ट्यम्।

---

1. लोकमान्यालङ्कारः - 3

## 2. विरोधाभासालङ्कारः

चन्द्रालोककारः जयदेवः विरोधाभासालङ्कारात् पूर्वं विरोधालङ्कारं प्रत्यपादयत्। अनन्तरञ्च **'श्लेषादिभिर्विरोधश्चेद् विरोधाभासता मता''**[1] इति न्यरूप्यत्। परञ्च कुवलयानन्दकारः अकथयत् -

**''आभासत्वे विरोधस्य विरोधाभास इष्यते''**[2] इति।

उदाहरणत्वेन च-

**''विनापि तन्वि! हारेण वक्षोजौ तव हारिणौ''**[3]

लक्षणानुसारेण यत्र विरोधस्य आभासः भवति, न तु वस्तुतो भवति विरोधः, तत्र विरोधाभासनामकालङ्कारः भवति। तद्यथा- हे तन्वि! हारेण विना तव वक्षोजौ हारिणौ स्तः। उदाहरणेऽस्मिन् सहजरूपेणैव विरोधः प्रतिभाति यतः हारस्य अभावे हारिणौ इति कथं भवितुमर्हति? हारः अस्ति ययोस्तौ हारिणाविति व्युत्पत्त्या हारसहितयोरेव 'हारिणौ' इति पदेन व्यपदेशः स्यात्। परन्त्वत्र श्लेषमूलकविरोधाभासः वर्तते। ''हारः अस्ति अनयोः इति हारिणौ'' इत्यत्र विरोधः। अस्य ''हरतीति हारी, तस्य द्विवचने हारिणौ मनोरमौ'' इत्यर्थे परिहारः भवति।

अप्पयदीक्षितस्य एतल्लक्षणाधारेण आचार्यगजाननशास्त्रिणा लोकमान्यालङ्कारे अधोलिखितमुदाहरणं प्रस्तुतम्-

**एकस्मिन् विषये स्थितोऽपि बहुधा देशेष्वनेकेष्वटन्**
**तिष्ठँस्त्वं नृपबन्धनेऽपि सततं चोक्तः स्वतन्त्रो जनैः।**
**स्वार्थे निःस्पृहमानसोऽपि सततं स्वाराज्यवाञ्छाकुलः**
**स्वर्गस्थोऽपि च मर्त्यलोकमनिशं ब्रूषे यशोवर्ष्मणा।।**[4]

अर्थात् एकस्मिन् स्थाने स्थितोऽपि अनेकेषु देशेषु बहुधा अटसि, जनैरुच्यते यत् त्वं कारागृहे स्थितोऽपि सततं स्वतन्त्रस्तिष्ठसि। त्वं स्वार्थे सर्वथा निस्पृहमानसो वर्तसे चेदपि सततं स्वराज्यवाञ्छाकुलो विद्यसे। अपि च इह लोकत्यागानन्तरं स्वर्गस्थस्सन्नपि स्वीयेन यशःकायेन सततं मर्त्यलोकं ब्रूषे।

अत्र विषयपदस्य आद्यः अर्थः भवति देशः। अनेन विरोधः प्रतिभाति। यतो हि एकः जनः एकस्मिन् काले एकस्मिन् देशे स्थितः सन् अनेकेषु देशेषु कथम् अटितुं प्रभवति? इति

1. चन्द्रालोकः - 5/74
2. कुवलयानन्दः - 75
3. तत्रैव - 75
4. लोकमान्यालङ्कारः - 73

विरोधः। अपि च विषयपदस्यात्र अपरः अर्थः वर्तते लेखनम्। लेखनमाध्यमेन तिलकवर्यस्य सर्वदेशव्यापित्वं वर्तते। अनेन प्रथमविरोधस्य परिहारो भवति। एवमेव सः नृपबन्धने बद्धः सन् स्वतन्त्रः कथं भवितुमर्हति? अत्र नृपबन्धनपदस्यार्थः कारागृहमिति। कारागृहे स्थित्वा सः स्वतन्त्रः कथमिति द्वितीयः विरोधः। परन्तु शरीरेण सः कारागृहे स्थित्वाऽपि लेखन्या स्वतन्त्रः इत्यनेन द्वितीयस्य विरोधस्य परिहारो भवति। तथैव सर्वथा स्वार्थविमुखस्य नान्या काऽपि अपेक्षा भवति। तस्मात् सः तिलकः स्वार्थे निःस्पृहमान् भूत्वा स्वाराज्यवाञ्छाकुलः कथं वा भवितुमर्हति इति तृतीयः विरोधः। स्वाराजस्य सार्वजनीनत्वादत्रापि विरोधः प-रिहृतो भवति। चतुर्थे चरणेऽपि कविः कथयति यत् स्वर्गस्थोऽपि च मर्त्यलोकमनिशं ब्रूषे इति कथम्? अत्रापि विरोधः दृश्यते। अत्र परिहारो भवति यशोवर्ष्मणा यशःकायेन इति।

श्लोकेऽस्मिन् शास्त्रिवर्येण अत्यन्तं मनोरमः दृष्टान्तः समुपस्थापितः। चरणचतुष्टयेऽप्यत्र विरोधाभासः वर्तते। परन्तु तत्परिहारेण आनन्दातिरेकः जायते।

### 3. कारणमाला

शृङ्खलाबद्धालङ्कारेषु कारणमाला-एकावलीमालादीपकसारालङ्काराः गणिताः सन्ति। तेषु कारणमालायाः अत्रोल्लेखः क्रियते। चन्द्रालोके कुवलयानन्दे च अलङ्कारस्यास्य लक्षणोदाहरणयोः साम्यं वर्तते। तद्यथा-

**गुम्फः कारणमाला स्यात् यथा प्राक्प्रान्तकारणैः।**
**नयेन श्रीः, श्रिया त्यागस्त्यागेन विपुलं यशः।।[1]**

उदाहरणेऽस्मिन् प्राक्प्रान्तकारणत्वेन सर्वे विलसन्ति। तद्यथा लक्ष्मीः नीत्या, त्यागः श्रिया, विपुलं यशश्च त्यागेन प्राप्यन्ते।

एतदनुसारेणैव लोकमान्यतिलकमुद्दिश्य शास्त्रिणा स्रग्धराच्छन्दसि उदाहरणं प्रस्तुतम्। तच्च-

**भाग्याल्लब्धं त्वयाऽस्यां भरतभुवि वरं जन्म विप्रत्वमस्मात्**
**विप्रत्वाज् ज्ञानराशिर्गुरुपदममुतो लोकसेवा पदाच्च।**
**सेवाया लोकमान्यो गुरुरिति पदवीं दुर्लभां लब्धवान्स्त्वम्**
**देशे तेऽखण्डकीर्तिर्विलसति सततं लब्धयैतत्पदव्या।।[2]**

त्वया लोकमान्यतिलकेन अस्यां भरतभुवि अस्मिन् भारतदेशे वरं श्रेष्ठं जन्म विप्रत्वं च ब्राह्मणकुले जन्म लब्धं प्राप्तमित्याशयः। अस्मात् विप्रत्वात् अध्ययनपरम्परया ज्ञानराशिः वैदुष्यम्, अमुतः वैदुष्यात् गुरुपदं महत्त्वभूतं स्थानं, तस्मात् पदात् च लोकसेवा समाजसेवा,

1. चन्द्रालोकः - ५/८७
2. लोकमान्यालङ्कारः - १०१

सेवया च लोकमान्यः लोकमान्यपदवाच्यम् गुरुरिति यच्च श्रेष्ठतमं वर्तते तादृशीं दुर्लभाम् अनतिसुलभां पदवीम् उपाधिं त्वं तिलकः लब्धवान् प्राप्तवान्। अपि च लब्धयैतत्पदव्या प्राप्तया लोकमान्य इत्यनया पदव्या देशे सम्पूर्णे भारतराष्ट्रे सततम् अनिशं ते तव अखण्डकीर्तिः अक्षयं यशः विलसति शोभते इति।

श्लोकेऽस्मिन् जन्मतः आरभ्य एकैकेन कारणेन एकैकं कार्यं कथं संवृत्तमिति अतीव व्यवस्थितरीत्या प्रदर्शितं वर्तते।

कारणमालायां पूर्वपूर्वकारणेन उत्तरोत्तरं कार्यं निरूप्यते कविभिः। मम्मटाचार्योऽपि मनुते –

**''यथोत्तरं चेत्पूर्वस्य पूर्वस्यार्थस्य हेतुता''**[1]

लोकमान्यालङ्कारे तिलकमहाशयस्य भरतभुवि जन्मप्राप्तेः तथा च विप्रत्वप्राप्तेः कारणं भाग्यं वर्णितम्। तस्मात् विप्रत्वात् ज्ञानस्य प्राप्तिः। ज्ञानात् गुरुपदस्य च प्राप्तिः। पदात् लोकसेवा। सेवया च लोकमान्यपदव्याः प्राप्तिः तया पदव्या च देशे अखण्डकीर्तिविलासः सम्प्राप्तः। इत्थम् अस्मिन् उदाहरणे कारणमालायाः लक्षणं सम्पूर्णतया सङ्गच्छते।

### 4. काव्यलिङ्गालङ्कारः

काव्यलिङ्गालङ्कारः तर्कन्यायमूलकालङ्कारः वर्तते। चन्द्रालोककारेण प्रस्तुतं लक्षणं विलोक्य कुवलयानन्दकारः पदान्तरेण तल्लक्षणम् अकरोत्।

चन्द्रालोककारस्य–

**''स्यात् काव्यलिङ्गं वागर्थो नूतनार्थसमर्थकः''**[2]

कुवलयानन्दकारस्य च–

**''समर्थनीयार्थस्य काव्यलिङ्गं समर्थनम्''**[3]

एतदाधारेण गजाननवर्यः तिलकमहोदयेन कृतम् अध्यापनादिकं कार्यं समर्थयन् शार्दूलविक्रीडितच्छन्दसि काव्यलिङ्गालङ्कारस्य सुन्दरमुदाहरणं प्रास्तौत्। तद्यथा–

**वर्गं पाठयितुं नियोजितगुरुर्नैवागतो यद्दिने**
**वैदुष्यात्स तद्दिने च भवता स्वीकृत्य सम्पाठितः।**
**त्यक्तन्यायपथः कुमार्गपतितश्चान्धोऽधिकारी सदा**
**सन्मार्गे विहितो यतस्तव करे लेखाञ्जनं दृष्टिदम्।।**[4]

---

1. का. प्र. सू. – 185
2. चन्द्रालोकः – 5/38
3. कुवलयानन्दः – 120
4. लोकमान्यालङ्कारः – 115

यद्दिने यस्मिन् दिने नियोजितः नियुक्तः गुरुः आचार्यः पाठयितुम् अध्यापयितुं वर्गं कक्षां नैव आगतः समागतः तद्दिने तस्मिन् दिने वैदुष्यात् पाण्डित्यात् भवता श्रीमता तिलकेन सः वर्गः स्वीकृत्य कक्षां समागत्य सम्पाठितः सुष्ठु अध्यापितः। त्यक्तन्यायपथः त्यक्तः न्यायपथः येन सः त्यक्तन्यायपथः भ्रष्टः कुमार्गपतितः कुमार्गे कुत्सितमार्गे पतितः उत्कोचग्राही अन्धः कर्त्तव्यच्युतः अधिकारी शासकः सदा सर्वदा सन्मार्गे समीचीने मार्गे विहितः कृतः सुपथे आनीतः इति यतः यतोहि तव ते करे हस्ते दृष्टिदं नेत्रज्योतिप्रदाने क्षमं लेखाञ्जनं लेखरूपम् अञ्जनं वर्तते। अर्थात् भवतः प्रेरणाप्रदं विचारं लेखमाध्यमेन पठित्वा बहवो हि भ्रष्टाः कुमार्गे पतिताः अधिकारिणः उचितं मार्गं समागत्य राष्ट्रसेवायां संलग्नाः जाताः।

समर्थनयोग्यस्य कस्यचिदर्थस्य पदार्थेन वाक्यार्थेन वा समर्थनेनैव काव्यलिङ्गालङ्कारः प्रवर्तते। श्लोकेऽस्मिन् कविः कथयति यत् तिलकमहाशयः गुरोः अनुपस्थितौ वर्गे अपाठयत्। कथमेतदशक्यं शक्यं समभवदित्युक्ते वैदुष्यात् समर्थनं प्राप्यते। तथैव भ्रष्टाः कुमार्गगामिनः अन्धाधिकारिणः मार्गे आनयनं कथं समभवदित्यत्र दृष्टिं दातुं क्षमेण लेखाञ्जनेन समर्थनं प्राप्यते। अत्र वर्गपाठनस्य समर्थनं वैदुष्येण, कुमार्गपतितस्य अधिकारिणः सन्मार्गे प्रवर्तनं दृष्टिप्रदेन लेखाञ्जनेन कृतमित्यस्मात् उदाहरणमिदं सम्पूर्णतां प्राप्नोति।

### 5. यथासङ्ख्यालङ्कारः

वाक्यन्यायमूलकोऽयं यथासङ्ख्यालङ्कारः। आचार्यः जयदेवः स्वीयचन्द्रालोके अलङ्कारस्यास्य लक्षणम् अकथयत्– **''यथासङ्ख्यं द्विधार्थाश्चेत्क्रमादेकैकमन्विताः।''** एतदेव अप्पयदीक्षितः स्वीयग्रन्थे अवदत्–

**''यथासङ्ख्यं क्रमेणैव क्रमिकाणां समन्वयः।''**[1]

अलङ्कारेऽस्मिन् उक्तयोः पदसमूहयोः क्रमेण अन्वितिः एव महत्त्वं धारयति। पदानाम् अन्वयक्रमभेदेन अर्थः भिद्यते। गजाननशास्त्रिणा बहुसम्यक्तया अस्योदाहरणं स्रग्धराच्छन्दसि प्रस्तुतम्–

**प्राप्तान् गेहं त्वदीयं तव मतवचनद्रव्यलेखोपदेशम्**
**प्रष्टुं श्रोतुं गृहीतुं सततमनुदिनं सङ्ग्रहीतुं च धर्तुम्।**
**आपन्नाबुद्धनिःस्वस्वजनबुधजनान्प्रत्यभीक्ष्णं त्वया भो**
**उक्तं दत्तं वितीर्णं सततगतभयं दत्त आविष्कृतश्च।।**[2]

अयि भोः! सततम् निरन्तरम् अनुदिनम् प्रतिदिनं तव भवतः मतं विचारं प्रष्टुं त्वदीयं

---

1. कुवलयानन्दः – 108
2. लोकमान्यालङ्कारः – ५०

भवदीयं गेहं गृहं प्राप्तान् आपन्नान् प्रति तव मतम् उक्तम् कथितम्, वचनं श्रोतुं समागतान् अबुद्धान् प्रति वचनं दत्तं, द्रव्यं धनं ग्रहीतुं समागतान् निःस्वान् निर्धनान् प्रति धनं वितीर्णम् अर्पितम्, लेखं सङ्ग्रहीतुं समागतान् स्वजनान् प्रति लेखः राष्ट्रभक्तिपरिपूरितः लेखः दत्तः प्रदत्तः। अत्र स्वजनपदेन न तत्कुलोत्पन्ना जना अपितु स्वातन्त्र्यसङ्ग्रामसेवाव्रताः तत्सहयोगिनो बोध्याः तेषामेव तल्लेखोपयोगित्वात्। उपदेशं धर्तुं समागतान् बुधजनान् प्रति उपदेशश्च त्वया अभीक्ष्णं पौनःपुन्येन आविष्कृतः प्रकटीकृतः। अर्थात् भवदीयं गृहं ये ये कस्मिञ्चिद् विषये भवन्मतं प्रष्टुं समागताः तेभ्यः भवदीयं मतम् उक्तम्। ये अबुद्धाः भवद्वचनं श्रोतुं समागताः तेभ्यः भवद्वचनं प्रदत्तम्। ये निर्धनाः धनसाहाय्यं ग्रहीतुं समायातास्तेभ्यः धनं अर्पितम्। ये आत्मीयजनाः राष्ट्रोन्नयनार्थं भवतः लेखं सङ्ग्रहीतुं समागताः तेभ्यः भवदीयः लेखः प्रदत्तः। ये च प्रबुद्धाः भवतः उपदेशं धर्तुं भवतः गृहम् आगताः तेभ्य उपदेशः प्रदत्तः। एतत् सर्वं न केवलमेकदा अपि तु प्रतिदिनम्। तदपि सततं निर्भीकस्सन् भवता सर्वं साधितम्।

श्लोकेऽस्मिन् प्रथमचरणे प्रयुक्तानां मतवचनद्रव्यलेखोपदेशरूपकर्मपदानां द्वितीयचरणे प्रयुक्तैः क्रमशः प्रष्टुं श्रोतुं ग्रहीतुं सततमनुदिनं सङ्ग्रहीतुं धर्तुम् इत्येतैः तुमुन्तपदैस्सह चतुर्थचरणे प्रयुक्तेषु उक्तं दत्तं वितीर्णं दत्त आविष्कृतचेत्येतेषु क्रमशः अन्विति अतीव समीचीना दृश्यते। तस्मादत्र यथासङ्ख्यालङ्कारो भवति।

**6. प्रत्यनीकालङ्कारः**

प्रत्यनीकालङ्कारः लोकन्यायमूलकालङ्कारेषु परिगणितः वर्तते। चन्द्रालोके कुवलयानन्दे च समानरूपेण प्रत्यनीकालङ्कारस्य लक्षणं प्रतिपादितम्। तच्च–

**"प्रत्यनीकं बलवतश्शत्रोः पक्षे पराक्रमः।"**[1]

अनीकस्य=सैन्यस्य, प्रति=प्रतिनिधिः–प्रत्यनीकम्। यदा अजेयत्वात् शत्रुं परित्यज्य तस्य समर्थकस्योपरि केनचित् आक्रमणं विधीयते तदा वर्णनप्रसङ्गे प्रत्यनीकालङ्कारस्य उपस्थापनं क्रियते कविभिः।

अस्यालङ्कारस्य लक्षणसमन्वयः लोकमान्यालङ्कारे उद्धृते श्लोके अतीव रमणीयः वर्तते। आङ्ग्लशासकैः तिलकमहोदयः यदा निरुद्धः तदा सः स्वकीयलेखमाध्यमेन जनान्दोलनं वर्धितवान्। तेन कुपिताः आङ्ग्लशासकाः तस्य कुटुम्बजनान् पीडयितुमारब्धवन्तः।

तद्यथा–

**साक्षात्संसदि भाषणे च गमने रुद्धोऽपि राज्ञा भवान्**
**मर्मोद्घाटनदक्षलेखमलिखत्तत्पाशमुल्लङ्घ्य च।**

---

1. कुवलयानन्दः - 118

तस्मात्ते तुदनेऽक्षमा नृपचराः सम्बन्धिनो ये तव
तान् नित्यं कमपि प्रमादमगुरुं दृष्ट्वाऽतुदन् निर्दयम्॥[1]

भवान् तिलकः यदा साक्षात् प्रत्यक्षं संसदि सभायां भाषणे उद्बोधने गमने प्रवेशे राज्ञा आङ्ग्लशासकैः रुद्धः वारितः तदा तत् पाशं तद्बन्धनम् उल्लङ्घ्य उत्क्रम्य अपि मर्मणः उद्घाटनं मर्मोद्घाटनं तस्मिन् दक्षः समर्थः मर्मोद्घाटनदक्षः तं मर्मोद्घाटनदक्षं लेखं समाचारपत्रादिषु निबन्धम् अलिखत् लिखितवान्। तस्मात् तत्कारणात् भवन्तं तुदने पीडने अक्षमाः असमर्था ते नृपचराः आङ्ग्लसैनिकाः कमपि अगुरूं लघु प्रमादं दोषं दृष्ट्वा लघुदोषमपि अन्विष्य ये तव भवतः सम्बन्धिनः कुटुम्बसदस्याः आसन् तान् कुटुम्बसदस्यान् निर्दयं निर्दाक्षिण्यम् अतुदन् भृशमपीडयन्। आङ्ग्लशासकाः तिलकस्य पराजये अक्षमाः तत्सम्बन्धिनः पीडितवन्तः इति वर्णनात् प्रत्यनीकम्।

कविना प्रयुक्ते उदाहरणेऽस्मिन् शास्त्रोक्तरीत्या प्रत्यनीकालङ्कारस्य निदर्शनं भवति।

### 7. व्याजोक्त्यलङ्कारः

व्याजोक्त्यलङ्कारः गूढार्थप्रतीतिमूलकालङ्कारः वर्तते। चन्द्रालोके अस्य लक्षणं वर्तते –

"व्याजोक्तिः शङ्कमानस्य छद्मना वस्तुगोपनम्"।[2]

अस्मिन् अलङ्कारे गोपनमेव प्रामुख्यं भजते। तदाधृत्य एव कुवलयानन्दे उक्तम् –

"व्याजोक्तिरन्यहेतूक्त्या यदाकारस्य गोपनम्॥"[3]

अस्योदाहरणत्वेन लोकमान्यालङ्कारे विद्युन्मालाछन्दसि उक्तम्–

को दण्डार्हो न स्याल्लोको यश्चाराग्रे ब्रूतेऽनिष्टम्।
स्वाप्नं ह्येतन्नो चेत्कष्टं स्यादित्युक्त्वाऽगौप्सीः स्वीयम्॥[4]

यः जनः चाराणाम् अग्रे चाराग्रे गूढचराणां समक्षम् आङ्ग्लशासकविरुद्धम् अनिष्टम् अनीप्सितं ब्रूते कथयति तादृशः कः दण्डाय अर्हः दण्डार्हः दण्डनयोग्यः न स्यात् न भवेत्? अर्थात् सर्वोऽपि दण्डनयोग्यो भवेत्। नोचेत् अन्यथा एतत् स्वाप्नम् उक्त्वा प्रकटीकृत्य कष्टं स्यात् दुःखं स्यादिति। तस्य अन्वयने आङ्ग्ला बाधामुत्पादयितुं शक्नुवन्तीति स्वमनसि निहितां स्वातन्त्र्यभावनां न कुत्राप्यवोचत्। अतः हि निश्चयेन स्वीयं स्वकीयं स्वाप्नं मनसि धारितां देशस्वातन्त्र्यविषयिणीं कल्पनाम् अगौप्सीः गोपितवानिति व्याजोक्तिः।

---

1. लोकमान्यालङ्कारः – 115
2. चन्द्रालोकः – 5/110
3. कुवलयानन्दः – 152
4. लोकमान्यालङ्कारः – 150

## 8. संश्लेषमूलकालङ्कारः

अस्मिन् गणे संसृष्ट्यलङ्कारः सङ्करालङ्काराश्च वर्तन्ते। द्वयोः अलङ्कारयोः मेलनेन इमौ अलङ्कारौ भवतः। मेलनानन्तरमपि मिलितयोः तिलतण्डुलन्यायेन पृथक्तया स्पष्टा प्रतीतिः भवति चेत् संसृष्टिः तथा च नीरक्षीरन्यायेन पृथक्तया स्पष्टा प्रतीतिः न भवति चेत् सङ्करालङ्कारः भवति। अस्य च कुवलयानन्दे चत्वारो भेदाः निरूपिताः। परन्तु लोकमान्यालङ्कारकारेण आचार्यगजाननरामचन्द्रकरमलकरमहाशयेन कदाचिद् विस्तरभिया स्वकीयग्रन्थे उदाहरणं नैव प्रस्तुतम्।

शोधपत्रेऽस्मिन् स्थालीपुलाकन्यायेन किञ्चिदेव परिशीलितम्। परन्तु गजाननशास्त्रिवर्यस्य काव्यानां समग्रदर्शनेन ज्ञायते यत् अयं कविः शब्दालङ्कारेऽप्यतीव निपुणो वर्तते। अष्टदलद्वा-दशदलकमलबन्धः, पङ्कजबन्धः, पुष्पलताबन्धः, छत्रबन्धः इति विविधक्लिष्टबन्धानाश्रित्य अयं चित्रकाव्यं रचयामास। तद्यथा द्वादशकमलबन्धो यत्र प्रत्येकं सप्तमाक्षरं समानं भवति, प्रकृते शमित्यक्षरम्-

**वन्देऽहं महेशं सुरवरमनिशं दग्धसुश्रीरतीशं**
**कैलासावासदेशं स्वजनपरपशं प्रेतभूतप्रवेशम्।**
**मित्रश्रीमद्धनेशं सकलवरदशं मूर्ध्नि राजन्निशेशं**
**सत्पुत्रश्रीगणेशं करधृतकलशं शङ्करपार्वतीशम्॥[1]**

अस्य नैकाः कविताः राष्ट्रभावनया भाविताः, तथैव कासुचिदस्य रचनासु देशस्य साम्प्रतिकी दशा यान्त्रिकी च समुन्नतिरपि साधु निरूपिता।

लोकमान्यालङ्काराख्योऽयं ग्रन्थः वस्तुतो प्रतापरुद्रादिग्रन्थप्रवर्तितां परम्परां विंशतिशतके अग्रे संवर्धयति। विद्यानाथेन पाण्ड्यहेशीयान् राज्ञः आश्रित्य सर्वेऽलङ्काराः अन्ये च काव्यविषयास्तत्रैव प्रदर्शिताः। नञ्जराजयशोभूषणकृदादिभिः सेयं सरणिरग्रेसारितेति न केवलमलङ्कारप्रतिपादनदृष्ट्या अपितु परम्पराया विकासदृष्ट्यापि ग्रन्थरत्नस्याऽस्य महत्त्वमेधते। लोकमान्यो बालगङ्गाधरो न राजा। स तु स्वातन्त्र्यसङ्ग्रामस्य प्रमुखो नायक इति तादृशनायकमाश्रित्य प्रणीतोऽयं कदाचिदपूर्वो ग्रन्थ इति निश्चप्रचम्।

•••

1. गजाननग्रन्थावली - पुरोवाक्

UGC - CARE Listed
जनवरी–मार्च, 2021

शोधप्रभा
वर्ष : 46, प्रथमोऽङ्कः

# पुराणलक्षणसन्दर्भे श्रीमद्भागवतस्य दशलक्षणानि ग्रन्थस्वरूपे तेषां सङ्गतिश्च

डॉ. नीरजनौटियालः*

निराकारं नराकारं निर्गुणञ्च गुणावधिम्।
विलक्षणं जगज्जन्मलक्षणं श्रीहरिं नुमः॥
यल्लक्षणप्रमाणाभ्यां वस्तुसिद्धिरितीर्यते।
श्रीमद्भागवतस्यापि लक्षणं तदिहोच्यते॥

श्रीमद्भागवते भगवत्तत्त्वप्रतिपादकस्य ज्ञानस्यैव भागवतमिति व्यपदेशः। सिसृक्षाविमूढः[1] प्रजापतिर्ब्रह्मा कल्पादौ दुश्चरेण तपसा भगवन्तं नारायणमाराध्य[2] तत्कृपया यज्ज्ञानमवाप्नोति, तदेव भागवतमिति व्यपदिश्यते। श्रीमद्भागवते तच्चतुर्षु श्लोकेष्वेवंरूपेणोपक्लृप्तं, यथा–

अहमेवासमेवाग्रे नान्यद् यत् सदसत्परम्।
पश्चादहं यदेतच्च योऽवशिष्येत सोऽस्म्यहम्॥
ऋतेऽर्थं यत्प्रतीयेत न प्रतीयेत चात्मनि।
तद्विद्यादात्मनो मायां यथाभासो यथा तमः॥
यथा महान्ति भूतानि भूतेषूच्चावचेष्वनु।
प्रविष्टान्यप्रविष्टानि तथा तेषु न तेष्वहम्॥
एतावदेव जिज्ञास्यं तत्त्वजिज्ञासुनाऽऽत्मनः।
अन्वयव्यतिरेकाभ्यां यत् स्यात् सर्वत्र सर्वदा॥

(श्रीमद्भागवते–2/9/32–35)

---

* सहायकाचार्यः, संस्कृतविभागः, महायोगी–गुरु–गोरखनाथ–राजकीय–महाविद्यालयः, यमकेश्वर पौडीगढवालः, उत्तराखण्डः

1. स आदिदेवो जगतां परो गुरुः स्वधिष्ण्यमास्थाय सिसृक्षयैक्षत।
   तां नाध्यगच्छद् दृशमत्र सम्मतां प्रपञ्चनिर्माणविधिर्यथा भवेत्॥ (श्रीमद्भागवते - 2/9/5)
2. दिव्यं सहस्राब्दममोघदर्शनो जितानिलात्मा विजितोभयेन्द्रियः।
   अतप्यत स्माखिललोकतापनं तपस्तपीयांस्तपतां समाहितः॥
   तस्मै स्वलोकं भगवान्सभाजितः सन्दर्शयामास परं यत्परम्॥ (श्रीमद्भागवते - 2/9/8–9)

इदं ज्ञानमुपाश्रित्य भगवत्साधर्म्यमवाप्य प्रजापतिः पूर्वकल्पवत् स्थूलसूक्ष्मात्मकं स्थावरजङ्गमात्मकं सृष्टिप्रलयात्मकं च विश्वमिदं ससर्ज।[1]

भगवत्प्रोक्तमिदं तत्त्वात्मकं भागवतं लब्ध्वा प्रजापतिरेवास्य पुराणविद्यास्वरूपं रचयाञ्चकार। अस्मिन्नेव काले लक्षणविन्यासोऽप्यत्र दृग्गोचरतामायाति, तद्यथा –

**प्रजापतिर्धर्मपतिरेकदा नियमान्यमान्।**
**भद्रं प्रजानामन्विच्छन्नातिष्ठत् स्वार्थकाम्यया॥**
**तं नारदः प्रियतमो रिक्थादानामनुव्रतः।**
**शुश्रूषमाणः शीलेन प्रश्रयेण दमेन च॥**
**मायां विविदिषन् विष्णोर्मायेशस्य महामुनिः।**
**महाभागवतो राजन् पितरं पर्यतोषयत्॥**
**देवर्षिः परिपप्रच्छ भवान् यन्मानुपृच्छति।**
**तस्मा इदं भागवतं पुराणं दशलक्षणम्।**
**प्रोक्तं भगवता प्राह प्रीतः पुत्राय भूतकृत्॥**

(तत्रैव–2/9/39–43)

पुनरग्रिमेऽध्याये[2] भागवतस्य सर्गादिदशलक्षणानां वर्णनमेवं समुपलभ्यते–

**अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः।**
**मन्वन्तरेशानुकथा निरोधो मुक्तिराश्रयः॥**

(2/10/1)

इदानीं श्रीमद्भागवतानुसारमेव भागवतस्य दशलक्षणानि व्याक्रियन्ते–

**1. सर्गः**

**भूतमात्रेन्द्रियधियां जन्म सर्ग उदाहृतः।**
**ब्रह्मणो गुणवैषम्याद् विसर्गः पौरुषः स्मृतः॥**

इति (2/10/3)

इति, तथापि महदल्पव्यवस्थया पौराणिकानां मतान्तरेण च पुराणेषु दशलक्षणपद्धतिरपि सङ्गच्छत इति श्रीमद्भागवतस्यैव मतम्।[3]

ब्रह्मवैवर्त्तपुराणादिष्वपि महापुराणस्य दशलक्षणानि परिगृहीतानि। अन्यत्र श्रीमद्भागवतमपि 'महापुराणम्', 'क्षुल्लकपुराणम्' इति पुराणस्य द्विधाभेदमुपकल्प्य लक्षणसमन्वयेन प्रश्नस्यास्य समाधानं करोत्यतः दशलक्षणानि केवलं महापुराणानामेव

---

1. सर्वभूतमयो विश्वं ससर्जेदं स पूर्ववत्। (तथैव 2/9/3–8)
2. श्रीमद्भागवते द्वितीयस्कन्धस्य–10 तमेऽध्याये
3. दशभिर्लक्षणैर्युक्तं पुराणं तद्विदो विदुः। केचित् पञ्चविधं ब्रह्मन् महदल्पव्यवस्थया॥ (2/7/10)

भवन्ति, नोपपुराणानां, तेषामल्पविस्तरत्वाद्वर्णन- लाघवाच्चेत्यवगम्यते।

पुराणानां दश लक्षणान्यपि श्रीमद्भागवत एव द्वादशस्कन्धे सम्यक्तया व्याख्यातानि।[1] तेषामप्यनुवादोऽस्माभिरत्र विधीयते, येन भागवतस्य दशलक्षणेभ्यस्तेषां भेदो वैशिष्ट्यं च पृथग् भवेदिति तत्क्रमश एतेषामियं व्याख्या –

**1. सर्गः**

त्रिगुणात्मिकायां मूलप्रकृतौ गुणानां सङ्क्षोभात् ततो महत्तत्त्वस्योद्भवः, पश्चात् त्रिविधाहङ्कारेण पञ्चतन्मात्रपञ्चमहाभूतानां समुत्पत्तिरेव सर्गः।[2]

**2. विसर्गः**

परमेश्वरस्यानुग्रहेण प्रजापतिः सृष्टिसामर्थ्यमवाप्य महदादिभिः, पूर्ववासनानुसारं बीजाद् बीजमिव चराचरोपाधिविशिष्टस्य जगतो यां सृष्टिं कुरुते, सैव विसर्ग इत्याम्नायते।[3]

**3. वृत्तिः**

जीवानां जीवनधारणव्यवस्थाविधानमेव वृत्तिः। तद्यथा–

**वृत्तिर्भूतानि भूतानां चराणामचराणि च।**
**कृता स्वेन नृणां तत्र कामाच्चोदनयाऽपि वा।।**

इति। (श्रीमद्भागवते–12/7/13)

**4. रक्षा**

लक्षणस्यास्य सम्बन्धो भगवदवतारकथाभिः सह वर्तते। भगवान् युगे युगे तिर्यङ्मर्त्यदेवादिलीलारूपाणि विधाय, त्रयीधर्मविरोधिनां वधं वैदिकधर्मस्य च पुनरुद्धारं करोति तदिदमेव भगवत्कर्म रक्षेति व्यपदिश्यते।[4]

**5. अन्तराणि**

मनुर्देवाः मनुपुत्र, इन्द्रः, सप्तर्षयो भगवदंशावताराञ्चैते सर्वे मिलित्वा यत्कालमुपभुञ्जते तन्नियमनं च कुर्वन्ति, तदेवान्तरं मन्वन्तरमिति वाऽभिधीयते, यथा–

---

1. श्रीमद्भागवत –12/11/19
2. अव्याकृतगुणक्षोभाद् महतस्त्रिवृतोऽहमः।
   भूतमात्रेन्द्रयार्थानां सम्भवः सर्ग उच्यते।। श्रीमद्भागवत 12/7/11
3. पुरुषानुगृहीतानामेतेषां वासनामयः
   विसर्गोऽयं समाहो बीजाद् बीजं चराचरम्।। (12/7/12)
4. रक्षाच्युतावतारेहा विश्वस्यानु युगे युगे।
   तिर्यङ्मर्त्यर्षिदेवेषु हन्यन्ते यैस्त्रयीद्विषः।। (12/7/14)

**मन्वन्तरं मनुर्देवा मनुपुत्राः सुरेश्वरः।**
**ऋषयोंऽशावतारश्च हरेः षड्विधमुच्यते॥**

इति। (12/7/15)

**6. वंशः** ब्रह्मपरम्पराप्रसूतानां सूर्यचन्द्रादिवंशानां राज्ञां त्रैकालिकान्वयनिरूपणमेव वंशः-

**राज्ञां ब्रह्मप्रसूतानां वंशस्त्रैकालिकोऽन्वयः।** इति। $(12/17/16_{1/2})$

**7. वंशानुचरितम्**

यथा-

**वंशानुचरितं तेषां वृत्तं वंशधराश्च ये।**

इति। (12/7/16)

**8. संस्था** नैमित्तिकादिचतुर्धापलयनिरूपणं संस्था, यथा-

**नैमित्तिकः प्राकृतिको नित्य आत्यन्तिको लयः।**
**संस्थेति कविभिः प्रोक्ता चतुर्धाऽस्य स्वभावतः॥**

इति।(12/7/17)

**9. हेतुः**

जीवनिरूपणं हेतुः। यथोक्तं तत्रैवाष्टादशे श्लोके-

**हेतुर्जीवस्य सर्गादेरविद्याकर्मकारकः।**
**तं चानुशयनं प्राहुरव्याकृतमुतापरे॥**

**1. अपाश्रयः**

जाग्रत्स्वप्नसुषुप्त्यादिवृतित्रये, साक्षिरूपमधिष्ठानात्मकं यत्तुरीयं तत्त्वं, तदेवापाश्रयः। लक्षणेऽस्मिन् तस्यैव परिशुद्धिर्भवति।[1]

इत्येवं पुराणानां दश लक्षणान्यपि कथितानि। लक्षणदशकमिदं कस्यचिदपि महापुराणस्य (क्षुल्लकव्यतिरिक्तस्य[2]) सम्भवति। श्रीमद्भागवतानुसारेण लक्षणसमवायस्यास्य अष्टादशेष्वपि पुराणेषु व्याप्तिर्निश्चप्रचमेव, तेषां महापुराणत्वाद् अन्यद्वाष्टादशोपपुराण-प्राप्तित्वाच्चेति, यथा-

**एवं लक्षणलक्ष्याणि पुराणानि पुराविदः।**
**मुनयोऽष्टादश प्राहुः क्षुल्लकानि महान्ति च॥**

1. व्यतिरेकान्वयो यस्य जाग्रत्स्वप्नसुषुप्तिषु।
मायामयेषु तद्ब्रह्म जीववृत्तिस्वपाश्रयः॥ (श्रीमद्भागवत् 12/7/19)
2. क्षुल्लकम्-उपपुराणमित्यर्थः।

**ब्राह्मं पाद्मं वैष्णवं च शैवं लैङ्गं सगारुणम्।**
**नारदीयं भागवतमाग्नेयं स्कान्दसंज्ञितम्॥**
**भविष्यं ब्रह्मवैवर्त्तं मार्कण्डेयं सवामनम्।**
**वाराहं मात्स्यकौर्मं च ब्रह्माण्डाख्यमिति त्रिषट्॥**

इति। (श्रीमद्भागवते–12/7/22–24)

अत एव नूनं भागवतमपि (अष्टादशमहापुराणानामन्तर्भावितत्वाद्) एभिर्दशलक्षणैर्लक्षयितुं शक्यते। एतेषां लक्षणानां व्याप्तिरस्मिन्नपि वर्तते, यत इदमपि महापुराणपदवीमनुगतमेवेति किन्तु पूर्वमेवोक्तमस्माभिर्यद् भागवतकारः पुराणदशलक्षणव्यतिरिक्तं 'भागवतपुराणस्य' पृथग् लक्षणदशकं स्वीकरोति यतः **'अत्र सर्गो विसर्गश्च'** इत्यस्मिन् पद्ये 'अत्र' शब्दः प्रक्रान्तस्य[1] श्रीमद्भागवतस्यैवाध्याहारं करोति, न सामान्यस्य कस्यचिदपि पुराणस्येति प्रसङ्गमिमं सूक्ष्मधियाऽऽकलय्य सुतरां वेत्तुं शक्यते। पण्डितबलदेवोपाध्यायसदृशाः पुराणविषयकग्रन्थकारा एतयोर्लक्षणयोर्मध्ये भेदं नाङ्गीकुर्वन्ति। उभयमपि लक्षणसमुदायमिमे नामपार्थक्याद्भिन्नं वस्तुतोऽभिन्नमेव मन्यन्ते।[2] परस्पर–तुलनात्मकधियाऽध्ययनं विधाय एभिः पुराणानां लक्षणदशकेन साकं भागवतस्य दशलक्षणानामपि सङ्गतिः समुपकल्पिता परन्तु कार्येऽस्मिन् यः क्रमविपर्ययः कष्टकल्पना च प्रतिभाति, तेन सत्यपि क्वचिदर्थसाम्ये पुराणदशलक्षणेभ्यो भागवतस्य दशलक्षणानि विविद्भन्येव प्रतिभान्ति तद्दिङ्मात्रमत्रोदाह्रियते, यथा–

**उभयलक्षणानां तुलनात्मिका सारणी[3]**

| क्रमः | पुराणानां दशलक्षणानि श्रीमद्भगवतस्य द्वादश स्कन्धो, सप्तमेऽध्याये | भागवतस्य दश -लक्षणानि तत्रैव द्वितीयस्कन्धो दशमेऽध्याये | तुलना |
|---|---|---|---|
| 1. | सर्गः (क्रमः १) | सर्गः (क्रमः १ | विष्ठायसाम्यममिधान- क्रमसाम्यं च |
| 2. | विसर्गः (क्रमः २) | विसर्गः (क्रमः २) | ,, ,, ,, |
| 3. | वृत्तिः (क्र० ३) | स्थानम् (क्र० ३) | अभिधा नवैषम्यम् विष्ठायसाम्ये कष्टकल्पना च। |

1. द्वितीयस्कन्धस्य नवमाध्यायवर्तिनस्तस्मा इदं भागवतमित्यादि 43 तमश्लोकगतविषयस्येति।
2. द्रष्टव्यः– आचार्यबलदेवोपाध्यायस्य 'पुराणविमर्श' – हिन्दीग्रन्थः (पृ. 124–137) चौखम्बाप्रकाशन, वाराणसी, संवत् 2021 विक्रमी
3. पण्डितबलदेवोपाध्यायसरणीमनुसृत्यैवैषा सारणी प्रदर्शिता, केवलमस्यास्तुलनात्मकं प्रकरणमस्मत्कृतमिति द्रष्टव्यः "पुराणविमर्श" इत्याख्यो हिन्दीग्रन्थः, पृ. 136 (चौखम्बासंस्करणम् सं. 2021 विक्रमी)

| 4. | रक्षा (क्र० ४) | ईशानुकथा (क्र० ७) पोषणम् (क्र० ४) | अभिधानक्रमवैषम्य कष्ठटकल्पना च। |
|---|---|---|---|
| 5. | अन्तराणि (क्र० ५) | मन्वन्तरम् (क्र० ६) | अभिधानभेदः क्रमभेदश्च |
| 6. | वंशः (क्र० ६) | | अभिधानक्रमविष्ठायभेदाः, |
| | वंशानुचरितम्(क्र० ७) | ईशानुकथा(क्र० ७) | साम्ये क्लिष्ठत्वम्। |
| 7. | संस्था (क्र० ल्ल) | | |
| | १—नैमित्तिकः प्रलयः | | |
| | २—प्राकृतिक प्रलयः | निरोधः (क्र० ल्ल) | अभिधानपार्थक्यं, साम्ये |
| | | | किञ्चित् |
| | ३—नित्य प्रलयः | | क्लिष्ठत्वम्। |
| 8 | ४—आत्यन्तिकः प्रलयः | मुक्तिः (क्र० ११) | " " |
| 9. | हेतुः (क्र० ८) | ऊतिः (क्र० ५) | अभिधानक्रमवैभिन्यं |
| | | | विष्ठाये कष्टकल्पना च। |
| 10. | अपाश्रयः (क्र० १०) | आश्रयः (क्र० १०) | साम्यम्। |

वस्तुतः पुराणमुनिर्महर्षिः कृष्णद्वैपायनः श्रीमद्भागवतस्य रचनायाम्, अन्यपुराण-वाङ्मयरचनातः किमप्यनिर्वचनीयमेव वैशिष्ट्यमावहति यतोऽन्येषु पुराणेषु तस्य सङ्कलनसङ्ग्रथनकौशलमेव सरलातिसरलानुष्टुब्बहुलछन्दःप्रबन्धेन सर्वत्र वरीवर्ति। तेष्वखिलेष्वपि पुराणेषु प्रत्नसंवादानामविकलरूपेण सङ्ग्रथनपारतन्त्र्याद् वर्णाश्रमाचारादिलोक-धर्ममहिम्ना तत्सुलभकरणोद्देशाच्चेति, न तत्र तस्य निर्भरन्नदयतरङ्गिणी स्वच्छन्दतया समुद्वेल्लितुं शक्नोति स्म न वा ब्रह्मसूत्रसादृश्यगर्भा दार्शनिकी तस्य भाषाऽपि स्वीयगभीरत्वं श्लिष्टत्वं चोद्भासयितुमवसरमवाप्नोति स्म न च तद्वन्नानाच्छन्दोविन्यासकोमला प्रभवति स्म वर्णनोपक्रमे तस्य वाणी, तत्र तु मुनिवर्यो व्यासः मुख्यतया सम्पादकरूपेणावस्थितो दृश्यते, अत एव सप्तदशपुराणविरचनानन्तरमपि तस्य हृदि तादृशी निर्वृतिर्नोद्भूता यादृशी श्रीमद्भागवतरचनानन्तरमिति स्फुटमेव शेमुषीजुषां विदुषामित्यलमतिपल्लवितेन।

श्रीमद्भागवतस्येदमेव वैशिष्ट्यं यदिदं सम्पादकव्यासस्य स्वीयं स्वान्तः सुखाय समुपकल्पितं काव्यमप्यस्ति। यत्र विचारमूलं लोकापेक्षया भगवत्तत्त्वस्यैव प्राधान्यं वर्त्तते, मानवधर्मस्यापेक्षया भागवतधर्मस्यैव महत्त्वं विशेषेण प्रकाशते, सर्वरूपेण केवलं भगवानेव वर्णनाविषयीक्रियते; लोकस्तु तदनन्तरमेव तत्क्रीडनकवदायाति, न पूर्वकृतमहाभारतादिग्रन्थेष्विव प्राधान्यमावहतीत्यवधेयम्।

सार्वभौमसनातनधर्मस्य साधनक्षेत्रे प्रत्नकालादेव द्वे भावधारे युगपद्रूपेणायातः, प्रथमा तु मानवसौख्यापेक्षिका, तदुत्कर्षमूला पुरुषार्थप्रधाना **'मानवधर्मरूपा'** अपरा भगवनमूला, तदनुग्रहविग्रहा, तदनुसन्धित्सापेक्षिका **'भागवतधर्मरूपा'** चेति। एकस्यां मुख्यो मानवोऽस्ति, अन्यस्यां श्रीभगवान् एव प्रामुख्यं विदधाति। प्रथमायां, यद्यपि मनुष्यो धर्मानाचरति, पुरुषार्थान् विनोति, निखिलब्रह्माण्डभाण्डघटयित्रीं प्रकृतिदेवीमपि वशमानयति,

तस्माद् ऐश्वर्यं प्राप्नोति सिद्धिमपि च लभते, परं शान्तिं नाधिगच्छति। क्वापि कदापि वा तस्य हृदि रसानन्दनिष्यन्दिनी भक्तिर्नोद्भवति। किमधिकं सर्वथाऽपूर्ण इव प्रतिभाति मानवोऽस्यां प्रथमधर्मधारायाम्।

द्वितीयायां भागवतधर्मधारायां यदृच्छालाभसन्तुष्टो द्वन्द्वातीतो विमत्सरो जनो भगवदनुग्रह-भाजनत्वेन तदाज्ञापालनरूपकर्माणि निष्कामधिया समाचरन्नान्यान् बाह्यधर्मान् परित्यज्य भुक्तिमुक्तिस्पृहामपि च तिरस्कृत्य भगवत्प्रीत्यर्थमेव जीवनं धारयति, क्षणे क्षणे परमानन्दसुधा-माधुरीमास्वादयति, तस्यामेवास- कृदवगाहते, किञ्च पूर्णकाम एवावति सर्वथेति।[1]

श्रीमद्भागवतमस्ति एतस्या द्वितीयधर्मधारायाः प्रतिपादको ग्रन्थः, अत एवैतस्मिन् निसर्गत एव भगवत्प्रेमप्रवाहपूर्णा नैष्कर्म्योपलब्धिः पराशान्तिश्च सूत्ररूपेण राराज्यते, मणिरूपेण लक्षणलक्षितपौराणिकस्वरूपं काव्यकलासौष्ठवेन सकलमत्र महर्षिवर्येणोपनिबद्धम्। यतोऽन्येभ्यः पुराणेभ्यः सूक्ष्मरूपेणेदं विशिष्टमस्ति, अत एव भाषाशैलीलक्षणविन्यासोऽप्यत्र इतरेभ्यः पृथक् चतत्कारकोटिमुपगतो दृश्यते। श्रीमद्भागवतस्य भाषां विद्वांसः **'समाधिभाषा व्यासस्ये'** इति निगदन्ति। साहित्यिका अत्र 'नारिकेलपाकम्', 'आरभटीवृत्तिं' चोद्भावयन्ति, पौराणिकाः पृथग्रूपेणास्य लक्षणं रचयन्ति,

**यत्राधिकृत्य गायत्री वर्ण्यते धर्मविस्तरः।**
**वृत्रासुरवधोपेतं तद्भागवतमिष्यते॥**

(मत्स्यपुराणे 53/20)

इतिरूपेण,

**अर्थोऽयं ब्रह्मसूत्राणां भारतार्थविनिर्णयः।**
**गायत्रीभाष्यरूपोऽसौ वेदार्थपरिबृंहितः॥**

(गरुडपुराणे 10/283) इत्युक्तरूपेण च।

श्रीमद्भागवतं, स्वयमेवान्येभ्यः पुराणेभ्यः स्वकम्, इतरलक्षणेभ्यश्च स्वीयलक्षणानि स्फुटरूपेण विशिनष्टीति पूर्वमेवालोचितमस्माभिः।

एतावता द्वितीयस्कन्धे दशमेऽध्याये प्रोक्तानि भागवतस्य दशलक्षणानि एतस्मिन्नेव सङ्गच्छन्ते, नेतरेष्विति स्कन्धक्रमानुसारेणाध्ययनं कुर्वन्तोऽत्र वयं विशदयामः-

### 1. प्रथमः स्कन्धः ( अधिकारस्कन्धः )

श्रीमद्भागवतस्य प्रथमं स्कन्धमाचार्याः 'अधिकारस्कन्ध' इति मन्वते। दशलक्षण-लक्षिते भागवते 'कीदृशोऽधिकारिणः स्युरित्यस्मिन्नेव स्कन्धे विभिन्नकथाप्रसङ्गेषु

1. द्रष्टव्यः- अक्षयकुमारवन्द्योपाध्यायमहाशयानाम् "महर्षिकृष्णद्वैपायन और भागवतधर्म" इति हिन्दीनिबन्धः 'कल्याण' (हिन्दीमासिकपत्रम्), वर्ष 16, सं. 3 (गीताप्रेस, गोरखपुर) (पृ. 1177-1181)

सुस्पष्टमाविष्क्रियते। अस्य धर्मस्य स एवाधिकारी यस्य हृदि प्राणिनां कृते सहजरूपेणैव कारुण्योद्गमो जायते, यः खलु स्वापराधिनमपि जनं स्वविशालन्नदयानुरोधन क्षन्तुं सत्कर्त्तुं वा शक्नोति, भगवत्स्मरणकारिणीं विपत्तिमपि च सानन्दं स्वीकरोति। तत्सर्वमप्येतस्मिन् निदर्शिनीभूतं विद्यते, तद्यथा –

(1) सप्तमेऽध्याये महाभागा द्रौपदी स्वपञ्चपुत्रहन्तारं, धनञ्जयेन वशीकृतं वन्दिनम्, अश्वत्थामानं दृष्ट्वा करुणया निर्भिन्नन्दया तस्य महान्तमपराधमविगणय्य, कथयति यद् 'मादृशी हतपुत्र एतस्य जननी गौतमी मा भवेदिति।[1]

(2) अष्टमेऽध्यायेऽभिमनुप्रिया उत्तरा, अश्वत्थाम्ना प्रयुक्तेन ब्रह्मस्त्रेण पीडिता सती आर्त्तत्राणं श्रीगोविन्दमुपयाति, कथयति च–

''देव! कुरुवंशस्य बीजरूपेणावशिष्टो मदीयो डिम्भः कुशलं तिष्ठेत्, कामं मामयं ब्रह्मास्त्रः प्रदहतु[2] न मे मृत्योर्भयः किन्तु लोकहिताय गर्भस्थशिशुरयं मा विनश्येदिति।

(3) अस्मिन्नेव स्कन्धे धनञ्जयादिकानां जननी पृथा, श्रीकृष्णदर्शनकारणभूतं दुःखं कामयते।[3] यतो दुःखेनैव वास्तविकभगवत्प्रपत्तिः सम्भवति, यया श्रीकृष्णस्तुष्यति मुक्तेरप्युत्कृष्टं स्वकीयं दर्शनं च ददाति।

एतदतिरिक्तं महाभागवतस्य भीष्मस्य, शरशय्यात्मके महत्कष्टे भगवत्स्तुतिः, तत्कृपालुतायाञ्च स्मरणम् (1/9/32-42), परीक्षितः शापप्राप्त्यनन्तरमपि निर्द्वन्द्वात्मिका भगवत्तत्त्वजिज्ञासा (1/19) इत्यादि सर्वं भगवत्तत्त्वस्याधिकारस्यैव निरूपणं करोतिः, विविधै-राचार्यैरस्य तात्त्विकं निरूपणमिति तत्त्वन्यत्रस्माकं सन्दर्भान्तरे प्रविततमिति नेह वितन्यते।

## 2. द्वितीयस्कन्धः ( साधनस्कन्धः )

यथाऽधिकारिनिरूपणादृते दशलक्षणात्मकेऽस्मिन् भागवते जनानां प्रवृत्तिरेव संशयापन्ना स्यात्, तथैव तत्साधननिरूपणाद्विनाऽपि परमतत्त्वस्याधिगमो दुष्प्राप्यः सम्भवेदिति विनिश्चित्य श्रीमद्भागवतरसिकाः स्कन्धमिमं 'साधनस्कन्ध' इत्यभिधानेनालङ्कुर्वन्ति।

अस्मिन् स्कन्धे दश अध्यायाः सन्ति। येषु भगवत्प्राप्तेस्त्रीणि साधनानि व्याख्यातानि। यथा –

**( १ ) भगवत्तत्त्वस्य ध्यानविधिः**– प्रथमे द्वितीये चाध्याये

---

1. मुच्यतां मुच्यतामेष ................(भा.1/7/43)
   मा रोदीदस्य जननी गौतमी पतिदेवता।
   यथाऽहं मृतवत्साऽऽर्ता रोदिम्यश्रुमुखी मुहुः।। (1/7/43)
2. कामं दहतु मां नाथ मामे गर्भो निपात्यताम्।। (1/8/10)
3. विपदः सन्तु नः शश्वत्तत्र तत्र जगद्गुरो।
   भवतो दर्शनं यत् स्यादपुनर्भवदर्शनम्।। (1/7/25)

( २ ) **हृदयनैर्मल्यम्**- तुतीये चतुर्थेचाध्याये
( ३ ) **वैचारिकपराकाष्ठारूपमननम्**- 5-10 अध्यायेषु
एतत्स्कन्धगतोऽयं श्लोको भागवतधर्मस्याभिप्रेतसाधनमेवंरूपेणोपदिशति-

**तस्मात् भारत सर्वात्मा भगवान् हरिरीश्वरः।**
**श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यश्चेच्छताऽभयम्॥**

(2/1/5) इति।

**3. तृतीयः स्कन्धः ( सर्गस्कन्धः )**

श्रीमद्भागवतस्य पूर्वोक्तौ द्वावपि स्कन्धौ दशलक्षणात्मकभागवततत्त्वस्य पीठिकारूपेणोपन्यस्तौ। वस्तुतस्तत्त्वात्मिका भगवच्चर्चा तु तृतीयस्कन्धादेव समारभ्यते। अस्मिन्नेव स्कन्धे भागवतस्य प्रथमं लक्षणं सर्गाक्ष्यं विस्तरेण व्याख्यातम्। तदनुसारेणैवास्यापि 'सर्ग' इत्यभिधानमूरीकृतं विपश्चिद्भिः, यथा- स्कन्धस्यास्य पञ्चमेऽध्याये 'विदुरमैत्रेयसंवाद' द्वारेण सृष्टेः क्रमो निरूप्यते तदेषां द्वादशाध्यायपर्यन्तममूर्तसर्गरूपेणोपवर्ण्यते पश्चात् प्रकृतेस्त्रि-गुणात्मकस्वरूपस्य स्पष्टीकरणार्थं काश्चिद् गाथाः समाम्नाताः। षड्विंशे पुनः कपिलदेवहूतिसंवादरूपेण महत्तत्त्वादिभावानामुत्पत्त्यादिकथनेन 'सर्ग' एव व्याकृतः। निष्कर्षत इदं वक्तुं शक्यते यत् (1) चतुर्दशाध्यायादारभ्यै-कोनविंशाध्यायपर्यन्ते दितिकश्यपकथाप्रसङ्गं तमःप्राधान्येन सृष्टिवर्णनमत्र विहितं महर्षिणा।

दितिरूपायां तामसीप्रवृत्ता। यदा कश्यपरूपः सूत्रत्मा[1] अनिच्छयैव स्वं संयुनक्ति, तदा लोभात्मको हिरण्याक्षः[2] ''नास्तिकभावनाजन्यक्रोधाभि-निवेशात्मको हिरण्यकशिपुश्च'', (रागद्वेषाहङ्कारवशवर्ती यः स्वमीश्वरं मत्वा स्वर्णशय्यायामपि शान्तिं न प्राप्नोति) इत्यासुरभावापन्नौ पुत्रावुत्पद्येते।

इमास्तामसीप्रवृत्तयः सर्गस्यावष्टम्भकरूपेण भवन्ति, अतस्त्वेतन्निरोधार्थं क्रमशो वराहस्य नृसिंहावतारस्य चावश्यकता भवति।

**( क ) भगवान् वराहः**- दानरूपयज्ञप्रवृत्तेः सञ्चालकः। एतदवतारेण लोभात्मकहिरण्याक्षदैत्यात् पृथिव्युद्धरणं भवति, लोके सृष्टिचक्रविधायिनी यज्ञपरम्परा च पुनरपि नियम्यते।[3]

**( ख ) भगवान् नृसिंहः**- ब्रह्मसर्वात्मप्रवृत्तेः[4] प्रतीको नास्तिक- प्रवृत्तेरुन्मूलयिता

---

1. 'कश्यपः' इत्यस्य व्यत्ययानुसारेण 'पश्यकः' इति स्वरूपं भवति, यत्खलु द्रष्टारमात्मानं लक्षयति।
2. स्वर्णमेव यः खलु पश्यति तदर्थे च रसामपि रसातलं नयतीति।
3. द्रष्टव्याः श्रीमद्भागवतस्य तृतीयस्कन्धे, 13 तमेऽध्यो 34-39 श्लोकाः
4. सर्वं खल्विदं ब्रह्म- छान्दोग्योपनिषदि 3/14/9

परमेश्वरः यः कर्त्तुमकर्त्तुमन्यथाकर्त्तुं च प्रभवतिं सर्वथा।[1] अत एतस्यावतरणं सर्गमूले 'सर्वरूपेण हरिरिति' भागवतोक्तभावनायाः प्रामाण्यं सिद्ध्यति, यथोक्तमत्रैव –

**सत्यं विधातुं निजभृत्यभाषितं व्याप्तिं च भूतेष्वखिलेषु चात्मनः।**
**अदृश्यतात्यद्भुतरूपमुद्वहन् स्तम्भे सभायां न मृगं न मानुषम्।।**

इति। (श्रीमद्भा. 7/8/18)

(2) एवं मनुकर्दमदेवहूतीत्यादिमनीषिणां कथाप्रसङ्गाः रजःप्राधान्येन सृष्टिवर्णनं कुर्वन्ति। अत्रः सर्गसमृद्ध्यर्थसञ्जातानां देवहूतेर्नवकन्यानां समुत्पत्ति- स्तासां विवाहादीनां कथा चेत्येतत्सर्वं सृष्टिविस्तारमेव परिलक्षयति।

(3) अन्ते च, चतुर्विंशत्यध्यायादारभ्य त्र्यस्त्रिंशपर्यन्तं, भगवतः कपिलावतारव- र्णनेन प्रकृतिपुरुषविवेकमूलकसत्त्वप्राधान्येन सृष्टेः सन्धरणं निगदितमिति प्रथमलक्षणमत्र सुष्ठुतयाऽनुस्यूतं दृश्यते।

### 4. चतुर्थः स्कन्धः (विसर्गस्कन्धः)

पूर्वाक्तानुसारेणायमेव 'विसर्ग' शब्दस्य निःसृष्टार्थो यदेकस्मिन् ब्रह्माण्डभाण्डे प्रजापतिकृतायाः पञ्चभूतात्मिकायाः सृष्टं स्वरूपं किमिति पर्यालोचनम्।

एतस्या मूलं, धर्मार्थकाममोक्षरूपपुरुषार्थचतुष्टयमतः स्कन्धेऽस्मिन् क्रमश एतस्यैव व्याख्यानं पृथक्पृथगध्यायेषु समुपकल्पितं श्रीमद्भागवतकृता, यथा –

**(१) प्रथमसप्ताध्यायेषु-** दक्षयज्ञवर्णनव्याजेन धर्मपुरुषार्थस्य निरूपणम्, तत्र 'शिव' तत्त्वस्यावमाननाफलेन यज्ञध्वंसरूपधर्मव्यपायः, पुनर्भगवत्प्रपत्तिद्वारेण तद्धर्मस्य पूर्णतेति धर्म एव कथाभिः कथितः। अत्र दक्षोऽभ्युदयः शिवश्च निःश्रेयसापरपर्यायस्तयोः सामञ्जस्येनेव धर्मरूप-वास्तविकी स्थितिरित्येतस्य प्रघट्टस्य निःस्यन्दितार्थः।

**(२) अनन्तरमष्टमाध्यायाद् द्वादशाध्यायापर्यन्तं-** ध्रुवकथामाध्यमेन, भगवदाश्रयादर्थपुरुषार्थस्य निरूपणं तच्छद्धिप्रतिपादनं च दृश्यते।

**(३) एकादशाध्यायेषु-** पृथुचरितं वर्ण्यते। यत्र पृथिव्या दोहनमित्यादिगाथाभिः 'काम' पुरुषार्थस्य विस्तृतिस्तद्यज्ञमूलकत्वं च द्योतितम्।

**(४) अन्तिमेष्वष्टाध्यायेषु-** प्राचीनबर्हिनारदसंवादेन, तदन्तर्गत- पुरञ्जनोपाख्येन प्रचेतसां तपचर्यावर्णनेन, रुद्रगीतेन, भगवद्दर्शननारदादिमुनी- श्वराणामुपदेशवर्णनेन च मोक्षरूपश्चरमः पुरुषार्थः सम्यङ् निर्णीतः अतो विसर्गात्मकपुरुषार्थचतुष्टयव्याख्यानादयम

---

1. हिरण्यकशिपुर्नास्तिकभावनायाः प्रतीक इति तत्कथनेनैव व्यक्तं भवति, यथा-
   यस्त्वया मन्दभाग्योक्तो मदन्यो तगदीश्वरः।
   क्वासौ यदि स सर्वत्र कस्मात् स्तम्भे न दृश्यते।।
   गोपायेत हरिस्त्वाद्य यस्ते शरणमीप्सितम्।। इति। (श्रभ्मद्भागवते 7/8/13-14)

न्वर्थनामा चतुर्थो विसर्गस्कन्धः।

**5. पञ्चमः स्कन्धः ( स्थानस्कन्धः )**

लक्षणानुसारेण भगवतो विष्णोस्ता मर्यादास्ते नियमा, ये खलु सर्गस्यावस्थाने सहायका भवन्ति 'स्थान'-पदेनात्र सङ्गृह्यन्ते। पञ्चमेऽस्मिन् स्कन्धे त एवेत्थमुपलभ्यन्ते-

**( १ ) भूगोलवर्णनम्-** 16, 18, 19, 20 अध्यायेषु
**( २ ) खगोलवर्णनम्-** 21, 22, 23 अध्यायेषु
**( ३ ) पातालवर्णनम्-** 24, 25 इत्यध्यायद्वये

एतदतिरिक्तमपि सर्वधारणनियमाः प्रियव्रताग्नीध्रादिराज्ञां चरितेषु सूत्ररूपेण सङ्गुम्फिताः सन्ति।

स्वाम्यखण्डानन्दसरस्वतीपादा अदितश्च[1] चतुर्विंशत्यध्यायेषु प्रकृतिजयम्, अन्तिमे चाध्याययुगले क्रमश ईश्वरस्य जीवस्य च विजयं स्वीकुर्वन्ति। एवं लक्षणसङ्गतिरत्र नितरामुपनन्ना एव।

**6. षष्ठः स्कन्धः ( पोषणस्कन्धः )**

स्कन्धस्यास्य प्रथमोऽयं प्रश्नो यत्कथं जीवो नकराद्विमुच्येत? यथा-

**अधुनेह महाभाग यथैव नकरान्नारः।**
**नानोग्रयातनान्नेयात्तन्मे व्याख्यातुमर्हसि॥**

(6/1/6)

प्रश्नमिमं समाधातुं श्रीशुको विविधप्रायश्चित्तानुष्ठानानि विनिर्दिशति, पश्चात्सारभूतमिमं सिद्धान्तमुदीरयति-

**न तथा ह्यघवान् राजन् पूयेत तप आदिभिः।**
**यथा कृष्णार्पितप्राणस्तत्पूरुषनिषेवया॥**

इति। (6/1/6)

अनन्तरं सुस्पष्टतया वैयासकिरिदमपि स्वीयं मतं स्थापयति-

**सकृन्मनः कृष्णपदारविन्दयोर्निवेशितं तद्गुणरागि यैरिह।**
**न ते यमं पाशभृतश्च तद्भटान् स्वप्नेऽपि पश्यन्ति हि चीर्णनिष्कृताः॥**

इति। (6/1/19)

करुणावरुणालयस्य भगवत एषा कृपैव तस्य **'पोषणशक्तिः'** इति वैष्णवानां स्वीकृतः

---

1. द्र. - 'मानवजीवन और भागवतधर्म' (हिन्दीपुस्तकम् पृ. 117) सत्साहित्यप्रकाशनट्रस्ट, 'विपुल' 28/16 वी. जी. खेर मार्ग, बम्बई, सन् 1971

कल्पोऽत्रापि सङ्गच्छते। तन्निदर्शनरूपेण किञ्चिदुल्लिख्यते-

(1) पापीयान् कश्चिदजामिलनामा दासीपतिर्दुष्कर्मनिरतो द्विजः, स्वमरणसमये भीत्या स्वीयं नारायणनामानं कनिष्ठं प्रियं च पुत्रं, 'नारायण' इत्याजुहाव। तेन साङ्केत्येनैव भगवन्नामोच्चारणेन तस्य सद्गतिः सञ्जाता। इदं भगवतः पोषणशक्तेरेव माहात्म्यम्।[1]

(2) वृत्रासुरकथा, तत्कृता भगवत्स्तुतिश्चापि सम्यग्रूपेण श्रीहरेरनुग्रहमूलकतां समुद्घाटयति। दिङ्मात्रमत्रोदाह्रियते-

**न नाकपृष्ठं न च पारमेष्ठ्यं न सार्वभौमं न रसाधिपत्यम्।**
**न योगसिद्धीरपुनर्भवं वा समञ्जस त्वा विरहय्य काङ्क्षे॥**
**अजातपक्षा इव मातरं खगाः स्तन्यं यथा वत्सतराः क्षुधार्ता।**
**प्रियं प्रियेव व्युषितं विषण्णा मनोरविन्दाक्ष दिदृक्षते त्वाम्॥**

(श्रीमद्भा. 6/11/25-26)

स्कन्धेऽस्मिन्नूनविंश अध्यायाः, भगवन्नामरूपार्चासम्बन्धेन त्रिधा विभज्यन्ते, यथाहि-

(1) प्रथमादारभ्य तृतीयपर्यन्तम्- **'नाम' माहात्म्यम्**

(2) चतुर्थादारभ्य द्वादशपर्यन्तम्- **'रूप' माहात्म्यम्**

(3) त्रयोदशादारभ्योनविंशपर्यन्तम्- **अर्चापद्धतिर्माहात्म्यञ्चेति पोषणाभिधानस्य** चतुर्थलक्षणस्य षष्ठस्कन्धे सङ्गतिरवगन्तव्या।

### 7. सप्तमः स्कन्धः ( ऊतिस्कन्धः )

'ऊति'-शब्देन जीवस्य 'वासना' गृह्यते। एतस्या अपरमभिधानमविद्येति तत्त्वविद्भिः कथ्यते। सेयमविद्या पञ्चपर्वा- **अविद्याऽस्मिताराग- द्वेषाभिनिवेशरूपा**[2] चेति। एतानि पञ्च पर्वाणि पञ्चपर्वात्मिकया विद्यैव निहन्यन्ते, अथ च विद्याऽपि पञ्चपर्वा-विद्यातपोवैराग्याराधनातत्त्वज्ञानरूपेति।

श्रीमद्भागवतस्यास्मिन् स्कन्धे पञ्चदश अध्यायाः सन्ति। ते खलु त्रेधा विभज्यन्ते। पञ्च-पञ्चक्रमेण इमं पञ्चपर्वाऽविद्यायाः सात्त्विक- राजसतामसविभागेन त्रिधा विभक्तपञ्चपर्वाणि खण्डयन्तीति स्वाम्य- खण्डानन्दयतिवराणां मतम्।[3]

अस्मिन्मतेऽन्यप्रकारेणापि विभाजनमिदं स्वीकृत्य किमपि विवेचयितुं शक्यते तत्र सप्तमस्कन्धस्य प्रथमादारभ्य पञ्चमपर्यन्ताः पञ्चाध्याया अविद्यायाः पञ्चपर्वणां निदर्शनरूपेणोपन्यस्ताः, यथा-

---

1. द्र. - 6/1, 2, 3 अध्यायाः
2. इयमेव योगदर्शनं पञ्चक्लेशत्वेन समाम्नाता - 'अविद्याऽस्मितारागद्वेषभिनिवेशाः पञ्च क्लेशा' इति योगसूत्रम् 2/3
3. द्र. 'मानवजीवन और भागवतधर्म' पृ. 138

**( १ ) प्रथमेऽध्याये-** नारदयुधिष्ठिरसंवादात्मके जयविजयादिभगवत्पार्षदानां कथाप्रसङ्ग: एतयोर्न्द्यविद्याऽभिधं प्रथमं पर्व समुदेति, येन तौ सनकादिशापाद् भगवद्धामवैकुण्ठात् परिभ्रष्टौ, हिरण्याक्षहिरण्यकशिपुनामानौ दैत्यौ सम्भवत:, जीवस्याप्येवं गति:। अविद्योदयरूपशापाद्धेवायं भगवत्पार्थक्यमवाप्नोतीति कथाया निष्यन्दभूतोऽर्थ:।

**( २ ) द्वितीयेऽध्याये-** हिरण्यकशिपु:, हिरण्याक्षवधपर्याकुलान् स्वपरिवारजनान् विविधाभिर्धर्मोपदेशकथाभि: परितोषयति, स्वयं तु न शान्तिमवाप्नोति, धर्मकथानुसारमाचरणं वा विधत्ते। तस्याहङ्कृतिस्तं लोकपीडकरूपेणोपकल्पयति। अनेनास्मितारूपं द्वितीयं पर्व समाम्नातम्।

**( १ ) तृतीये-** तपसा वरप्राप्तिप्रसङ्गेन तृतीयस्य 'राग'-पर्वणो व्याख्या भवति।

**( २ ) चतुर्थे-** हिरण्यकशिपोरत्याचारम्, अविद्याया 'द्वेश' रूपं घटकं प्रमाणयति।

(३) अनन्तरं **पञ्चमेऽध्याये,** अभिनिवेशपर्ववशमुपगत: स (हिरण्यकशिपु:) स्वीयसिद्धान्तस्याननुकूलमाचरणपरं ऋजुकं स्वतनयं प्रह्लादमपि हन्तुमुद्यतो भवतीति पञ्चस्वध्यायेषु पञ्चपर्वाऽविद्या व्याख्यायते।

UGC- CARE Listed
जनवरी-मार्च, 2021

शोधप्रभा
वर्ष : 46, प्रथमोऽङ्कः

# भोजराजसम्मत-शृङ्गार-रसावियोगसंकल्पनयोः विश्लेषणम्

डॉ.गोपालकुमारझा *

भोजराजः परमारवंशस्य नवमो राजाऽसीत्। परमारवंशीया ये राजान आसंस्ते मालवराज्यस्य राजधान्यां धारानगर्यामष्टमशताब्दीतः चतुर्दशशताब्दपूर्वार्धपर्यन्तं शासनं कृतवन्तः। तेषु भोजराजेन 1000ई. तः 1055ई. पर्यन्तमतिदीर्घावधिं यावद् राज्यं कृतम्। भोजराजस्य व्यक्तित्वमतिचमत्कारिकमासीत्। एतादृशे महापुरुषे 'सर्वतन्त्रस्वतन्त्र' पदमन्वर्थो भवति। सः काव्य- दर्शन- वास्तु- युद्धकौशल- ज्योतिष- आयुर्वेदशास्त्रेषु परमनिष्णात आसीत्। तस्य समयस्य विविधविषयस्य चतुरशीतिः (84) ग्रन्थास्तेन विरचिता इति इतिहासज्ञाः भणन्ति।[1] तेषु ग्रन्थेषु काव्यशास्त्रविषयकं ग्रन्थद्वयमस्ति- सरस्वतीकण्ठाभरणम्, शृङ्गारप्रकाशश्च। सरस्वतीकण्ठाभरणनाम्ना ग्रन्थद्वयं वर्तते। प्रथमः व्याकरणविषयकः, द्वितीयश्च साहित्यविषयकः। शृङ्गारविषये स्वकीयमतस्थापनाय तेन सरस्वतीकण्ठाभरणे सूत्ररूपेण शृङ्गारप्रकाशे च विस्तृतेन व्याख्या कृता। शृङ्गारप्रकाशस्यापरनाम साहित्यप्रकाशोऽप्यस्ति।

संसारेऽस्मिन् मानवानां जीवनस्य परमलक्ष्यं पुरुषार्थचतुष्टयमस्ति। तल्लक्ष्यं स्वीकृत्य भोजराजोऽस्मिन् ग्रन्थे विभिन्नशास्त्रान्तर्गतस्य मानवानां सम्पूर्णसद्व्यवहारस्य विवेचनं कृतवान्। अर्थात् भोजदेवः साहित्यशास्त्रस्य रचनां रसानुभूतिविवेचनायै एव न कृतवान् अपितु भारतीयसंस्कृत्यानुविद्धसम्पूर्णसद्व्यवहारं प्राप्तुम् अथ च आत्मानुभूतये मोक्षप्राप्तये च करोति। अत एव शृङ्गारप्रकाशे वर्ण्यविषये स्वयं भोजदेवेनोक्तम्-

**''एतस्मिन् हि शृङ्गारप्रकाशे सुप्रकाशमेवाशेषशास्त्रार्थसम्पदुपनिषदाम् अखिलकलाकाव्यौचित्यकल्पनारहस्यानां च सन्निवेशो दृश्यते।[2]''**

ग्रन्थोऽयं विशालतमः। अस्मिन् साहित्यशास्त्रविषयकसम्पूर्णघटकतत्त्वानां विवेचनं सूक्ष्मातिसूक्ष्मदृष्ट्या ग्रन्थः। क्रियते एतेषां काव्यघटकतत्त्वानां भारतीयसंस्कृत्यनुरूपधर्म-अर्थ-काम- मोक्षदृष्ट्याविभागमपि करोति। सर्वत्र पुरुषार्थस्य चिन्तनं प्राप्यते। अन्याचार्येभ्यः इदमेव भोजराजस्य वैशिष्ट्यं वर्तते।

---

* परियोजना सहायकः, साहित्यविभागः, श्रीलालबहादुरशास्त्रीराष्ट्रीयसंस्कृतविश्वविद्यालयः, नवदेहली-16

1. सरस्वतीकण्ठाभरणस्य भूमिकायाम् पृ. 9, संस्कृत काव्यशास्त्र का इतिहास- म.म.पी.वी.काणे, पृ. 327
2. शृ. प्र.- 11, पृ. सं.-614

**भोजराजस्य शृङ्गारसंकल्पना-**

शृङ्गारप्रकाशस्य एकादशप्रकाशे शृङ्गारविषयकमतं विवेचितम्। अत्र शृङ्गारोऽहङ्कारतया स्वीकृतोऽस्ति। सर्वेषां भावानामुत्पत्तिस्थानरूपेणाहङ्कारमेव स्वीकरोति। तत्र शृङ्गारस्य विषये भोजराजस्य प्रमुखबिन्दव एते सन्ति-

1. **अहङ्कार ( अभिमानः ) एव शृङ्गारसंज्ञां लभते, नान्यः।**
2. **सर्वेषु व्यवहारेषु अहङ्कार एव।**
3. **शृङ्गारादेव भावाः उत्पद्यन्ते, पुनः तं परं प्रकर्षयन्ति च।**
4. **सर्वेः भावाः परं प्रकर्षं प्राप्य प्रेमण्येव पर्यवस्यन्ति, स एव रसः।**
5. **स्थायिभावादीनां विभागः नोचितः, अपितु सर्वे भावाः भवन्ति।**
6. **गुण-रसादयोऽपि अलङ्काराः भवन्ति।**
7. **संसृष्टिः विशेषरूपेण रसावियोगहेतुर्भवति।**
8. **नायकप्रकृतिविशेषादपि रसाः निष्पद्यन्ते।**
9. **एक एव रसः, धर्म-अर्थ-काम-मोक्षादिभेदेन चतुर्धा भवति।**

भोजराजोऽहङ्कारम् एव शृङ्गारस्य अपरपर्यायरूपेण स्वीकरोति। स एवाभिमान स एव रसः।[1] स मिथ्या अभिमानो नैव अपितु सत्त्वस्वरूपस्य (प्रकाशस्वरूपस्य) आत्मनोऽहङ्कारगुणविशेषरूपेण तिष्ठति। आत्मा आनन्दमयो भवति तस्य विशेषगुणोऽहङ्कारोऽपि आनन्दानुविद्धः इति। यं प्राप्यैव रमते, स्मयते, उत्सहते, स्निह्यतीति।

संसारे अपि दृश्यते, असाध्यकार्यं साध्यं करोमि, अहमिदमुत्कृष्टकार्यं कृतवान् इति अहङ्कारागमो भवति। जनः तमहङ्कारमास्वाद्य गर्वयति आनन्दं वा प्राप्नोति। यद्यपि अहङ्कारस्त्रिधा (सत्त्वरजस्तमः) इति सांख्यदर्शने स्वीकृतमस्ति। किन्तु आनन्दरूपस्तु सत्त्वाहङ्कार एव।

अत एव भोजराजः कथयति यदहङ्कारार्थस्य अन्वयादेव काव्ये काव्यत्वं भवति। यथोक्तम्-

**रसोऽभिमानोऽहंकारः शृङ्गार इति गीयते।**
**योऽर्थस्तस्यान्वयात्काव्यं कमनीयत्वमश्नुते।।[2]**

सः अहङ्कारः कीदृशः भवति इति विचिन्त्य तल्लक्षणं करोति। विशिष्टादृष्टजन्मा प्राणिनामन्तरात्मसु आत्मगुणसम्पदाम् उत्कर्षबीजं सुखदुःखादिद्वन्द्व-कारकः संस्कारोऽहङ्कारगुणविशेषो भवति। यथोक्तम्-

**विशिष्टादृष्टजन्मायं जन्मिनामन्तरात्मसु।**
**आत्मसम्यग्गुणोद्भूतेरेको हेतुः प्रकाशते।।[3]**

---

1. तं चात्मनोऽहङ्कारगुणविशेषं ब्रूमः। स शृङ्गारः, सोऽभिमानः, स रसः। तत एते रत्यादयो जायन्ते। शृ.प्र. 11, पृ.
2. सरस्वतीक.- 5.1
3. सरस्वतीक.- 5.1,2

**इतोऽपि–**

**"शृङ्गारो हि विशिष्टेष्टदृष्टचेष्टाभिव्यञ्जकानाम् आत्मगुणसम्पदामुत्कर्ष–बीजं बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नसंस्काराद्यतिशयहेतुरात्मनोऽहङ्कारगुणविशेषः सचेतसा रस्यमानो रस इत्युच्यते।"[1]**

एतादृशः शृङ्गारो यस्मिन् भवति, स एव रसिकः अन्यथा नीरसो भवति। यथोक्तम्–

**''यदस्तित्वे रसिकोऽन्यथात्वे नीरस इति।''**

एतादृशः आत्मनोऽहङ्कारगुणविशेषः शृङ्गारः केन प्रकारेण भवति इति जिज्ञासायां स वदति– रत्यादिभावानामिदमेवोत्पत्तिस्थानम्। अभिमानिनः शृङ्गारिणो वा रत्यादयो जायन्ते। केचित् (आनन्दवर्धनादयः) वदन्ति यत् स्थायिभावः एव व्यभिचारिभावादिभिः परप्रकर्षं प्राप्य रस इति कथ्यते।[2] भोजराजस्तेषां मतं न मनुते। तन्मते बहवः रसाः न भवन्ति, एक एव शृङ्गारः। सोऽभिमानः।

मानवेषु अहं भावः न स्यात् तर्हि यन्त्रवत् क्रियाकलापः स्यात्। मानवानां चेतनत्वम् अहङ्कारादेव भवति इति तु भारतीयदर्शनेषु सर्वत्र विवेचितमस्ति। प्रकृति–पुरुषयोः प्रथमो विकारः महद्, महतोऽहङ्कारः, अहङ्कारादन्यतत्त्वानामुत्पत्तिर्भवति। एषः सत्त्वरजस्तमोगुणादिभेदेन त्रिधा भवति। अनेनाहंभावस्य महत्त्वं तु सर्वविदितमस्ति। यस्मिन् वस्तुनि 'मम' भावस्याभावो भवति, तस्मिन् रागोऽपि (प्रेम) न भवति। मम शब्द एव प्रेम्णः हेतुरिति कथयितुं शक्यते। सृष्टेः प्रेमभावकारणादेव श्लिष्टता भवति, अन्यथा एकाकिनी नीरसता एव भवेत्। अतः सर्वत्र अहङ्कार एव दृश्यते। इमं विचारमनुसृत्य भोजराजोऽपि विभिन्नभावानुविद्धविभिन्नोदाहरणैः सर्वेषु भावेषु अहङ्कारस्यावस्थितिरिति प्रतिपादितवान्।[3]

भोजः कथयति यत् केचित् (आनन्दवर्धनादयः) वदन्ति यत् विभावानु–भावव्यभिचारिसंयोगाद् स्थायी एव रससंज्ञां प्राप्नोति इति न, तर्हि विभावादयस्तु हर्षादिष्वपि विद्यमानाः भवन्ति, तेऽपि स्थायिभावाः स्युः। किन्तु हर्षादयस्तु स्थायिभावाः न भवन्ति। अत एव केचित् स्थायिभावाः केचिच्च नेति न सम्भवति, अपितु सर्वेषां भावानां मूले अहङ्कारस्तिष्ठति, अहङ्कारादेव सर्वेषां भावानाम् उत्पत्तिर्भवति। सोऽहङ्कार एव तत्र प्रधानत्वात् स एव शृङ्गारः, तस्मादेव सर्वेषां भावानामाविर्भावः। यथोक्तम्–

यच्चोक्तं विभावानुभावव्यभिचारिसंयोगात् स्थायिनो रसत्वमिति, तदपि मन्दम्,

---

1. शृङ्गारप्रकाशे एकादशप्रकाशे पृ. सं.– 614
2. तत्र केचिदाचक्षते रतिप्रभवः शृङ्गार इति। वयं तु मन्यामहे रत्यादीनामयमेव प्रभव इति। शृङ्गारिणो हि रत्यादयो जायन्ते, नाशृङ्गारिणः।शृङ्गारी हि रमते, स्मयते, उत्सहते, स्निह्यतीति। शृ. प्र. पृ. 614
3. शृ.प्र. 11, पृ. सं. – 636

हर्षादिष्वपि विभावानुभावव्यभिचारिसंयोगस्य विद्यमानत्वात्। तस्माद् रत्यादयः सर्व एवैते भावाः, **शृङ्गार एवैको रस इति।** तैश्च सविभावानुभावैः प्रकाशमानः शृङ्गारो विशेषतः स्वदते।[1]

सोऽहङ्कार एवैको रसः। यथा च-

न हि बहवो रसाः, अपि **त्वेक एव शृङ्गारो** रस इत्यग्रतोऽपि प्रबन्धेन प्रतिपादयिष्यते।[2]

भोजः कथयति स्थायिभावः रस इति भवितुं न शक्यते। ते तु भावाः भवन्ति। अहङ्कारादेव तेषामुत्पत्तिः[3] सम्भवति तथा च पुनः अहङ्कार एव परप्रकर्षम् अधिगच्छति।[4] अर्थात् यथा सूर्यादेव चन्द्रादयः ग्रहाः प्रकाशिताः भवन्ति, पुनश्च प्रकाशः परावृत्तः सूर्यं प्रकर्षयति।[5]

भोजस्य स्पष्टरूपेण चिन्तनमस्ति यद् ''प्रेमार्द्रं प्रणयिनि मनो नास्ति चेन्नास्ति किञ्चित्''। अर्थात् भावाः परप्रकर्षाधिगमाद् भावनापथातिक्रमे भावरूपतामुल्लङ्घ्य प्रेमरूपेण परिणताः सन्ति तदैव रसरूपम् इति ज्ञापयन् अहङ्कार उत्तरा (शृङ्गार) कोटिमधिगच्छति। अन्याचार्यैरपि 'प्रेयः प्रियतराख्यानम्' विवेचितमस्ति। तत्र प्रधानरूपेण प्रेमैव दृश्यते। यथोक्तम्-

"रसं त्विह प्रेमाणमेवामनन्ति, सर्वेषामपि हि रत्यादिप्रकर्षाणां रतिप्रियो रणप्रियो अमर्षप्रियः परिहासप्रिय इति प्रेमण्येव पर्यवसानात्।[6]

**अहेतुः पक्षपातो यस्तस्य नास्ति प्रतिक्रिया ।**
**स हि स्नेहात्मकस्तन्तुरन्तर्भूतानि सीव्यति।।**[7]

ततो हि-

**यदेव रोचते मह्यं तदेव कुरुते प्रिया ।**
**इति वेत्ति न जानाति तत्प्रियं यत्करोति सा।।**

अपि च-

**अकिञ्चिदपि कुर्वाणः सौख्यैर्दुःखान्यपोहति ।**
**तत् तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः।।**[8]

---

1. शृ. प्र. पृ. 615
2. शृ. प्र. पृ. 615
3. तदाविर्भावहेतवश्च तत्प्रभवा एव भावाः। ते चैकोनपञ्चाशत् । शृ. प्र. पृ. 614
4. तैश्च सविभावानुभावैः प्रकाशमानः शृङ्गारो विशेषतः स्वदते। शृ. प्र. पृ. 616
5. ''तैश्चायं प्रकर्षप्राप्तैः सप्तार्चिरर्चिश्चयैरिव प्रकाशमानःशृङ्गारिणामेव स्वदत' इति।''शृ. प्र. पृ. 616
6. शृ. प्र. पृ. 614
7. उराच.517
8. उराच. 2.19, 65

**दुक्खं दन्तो वि सुहं जणेइ जो जस्स वल्लहो होइ ।**

**दइअ-णह-दुमिआण वि वड्ढइ त्थणआण रोमञ्चो।।**[1]

(दुःखं दददपि सुखं जनयति यो यस्य वल्लभो भवति ।

दयितनखदूयमानयोरपि वर्धते स्तनयो रोमाञ्चः ।।)

तदुक्तम्-

**अप्रातिकूलिकतया मनसो मुदादेर्यस्संविदोऽनुभवहेतुरिहाभिमानः।**

**ज्ञेयो रसः रसनीयतयाऽऽत्मशक्ते( /रक्तेः ) रत्यादिभूमनि पुनर्वितथा रसोक्तिः।।**

ननु 'इदानीमेवोक्तं रतिप्रियो रणप्रियोऽमर्षप्रियः परिहासप्रिय इति रत्यादिप्रकर्षाणां प्रेमण्येव पर्यवसानात् रसमिह प्रेमाणमामनन्ती'ति।"[2] इति। स्पष्टं यच्छृङ्गारविषयिणी भोजराजस्य संकल्पना विलक्षणा अस्ति।

**भोजराजस्य रसावियोगसंकल्पना-**

इदानीं काव्यालङ्कारविषये तस्य मतमपि समीक्षणीयमस्ति। तेनैव काव्ये आनन्दसञ्चारकस्य रससञ्चारकस्य वा तत्त्वस्य भोजदेवस्य मतं स्पष्टं भविष्यति।

तत्र काव्यशास्त्रक्षेत्रे तस्य सूक्ष्मदृष्टिरद्वितीयाऽस्ति। भरत-भामह-दण्डी-वामन-रुद्रटप्रभृतीनां ग्रन्थेभ्य उदाहरणलक्षणे भोजो निःसङ्कोचं स्वीकृत्य, सम्यग् विमृश्य चैव स्वग्रन्थयोः सन्निविष्टवान्।

काव्यं रसान्वितम् आनन्दान्वितं वा कथं भवति इत्यस्मिन् सन्दर्भे भोजराजः आचार्यदण्डिनः अनुसरणं करोति। समीक्षकाः आचार्यदण्डिनम् अलङ्कारवादिश्रेण्यां स्वीकुर्वन्ति। दण्डिना कृतम् अलङ्कारस्य लक्षणमस्ति- **'काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते'**[3] अनेन लक्षणेन ये केऽपि काव्यशोभाकराणि तत्त्वानि सन्ति सर्वाण्यपि अलङ्काराः भवन्ति। तत्र रस-गुण-रीति-वक्रोक्ति-औचित्य-ध्वनि-वृत्ति-प्रवृत्ति-भावप्रभृतीनि सर्वाणि तत्त्वानि अलङ्कारा इति। मतमिदं पोषकत्वात् भोजराजोऽपि अलङ्कारसमर्थक आचार्यः। सः प्रथमं त्रिविधम् अलङ्कारवर्गं करोति-

त्रिविधः खल्वलङ्कारवर्गः- **वक्रोक्तिः, स्वभावोक्तिः, रसोक्तिरिति।**

1. तत्रोपमाद्यलङ्कारप्राधान्ये **वक्रोक्तिः।**
2. श्लेषादिगुणप्राधान्ये **स्वभावोक्तिः।**
3. विभावानुभावव्यभिचारिसंयोगात् तु रसनिष्पत्तौ **रसोक्तिरिति।**[4]

---

1. गास. 1.100
2. शृ. प्र. पृ. 613
3. काव्याद. 2.1.3
4. शृ.प्र. 11, पृ.सं. 628

अलङ्कारस्त्रिवर्गेषु रसोक्तिवर्गे रसस्य ग्रहणं करोति।

भोजराजमते रसावियोगस्य परं हेतुः संसृष्टिरलङ्कार एव। स कथयति दोषहानानां कान्तिरित्यादिगुणतत्त्वानां च तत्तत्स्थले वर्णनं कृतवान् किन्तु नानालङ्कारसंसृष्टौ एव रसस्य प्रकृष्टत्वं लभते। यथा भोजने मधुराम्ललवणषाडवानां, वेष इव वस्त्रानुलेपनमाल्य-विभूषणानां, धूप इव चन्दनागरुकर्पूरसिद्धकानां, सङ्गीत इव नृत्तवाद्यपाठ्यानां, प्रेमणीव कोपानुशयप्रसादसङ्गमसुखानां, गार्हस्थ्य इव धर्मार्थकाममोक्षसाधनानुष्ठानानां, काव्यशरीरेऽपि रूपकादीनां संसृष्टिरेव विशेषतः स्वदमाना रसावियोगहेतुर्भवति।

तत्रालङ्कारसङ्करः (अलङ्कार-) संसृष्टिरित्येव वक्तव्ये नानाग्रहणं गुणरसादीनामप्यलङ्कारताप्रतिपत्त्यर्थम्। तेषामपि काव्यशोभाकरत्वेनालङ्कारत्वात् । यदाह-

**काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते।**
**ते चाद्यापि विकल्प्यन्ते कस्तान् कार्त्स्न्येन वक्ष्यति॥**[1]

अपि च-

**काश्चिन्मार्गविभागार्थमुक्ताः प्रागप्यलङ्क्रियाः।**
**साधारणमलङ्कारजातमद्य प्रदर्श्यते॥**[2]

तत्र काव्यशोभाकरानित्यनेन श्लेषोपमादिवद् गुणरसभावतदाभासतत्प्रशमान-प्युपसंगृह्णाति।[3]

उपर्युक्तवर्णनेन ज्ञायते यत् भोजराजः सर्वाणि काव्यघटकतत्त्वानि अलङ्कारत्वेन स्वीकरोति।

भोजराजस्य शृङ्गारविषये विवेचनम् अपूर्वम् एव। एतादृशं वर्णनं संस्कृतवाङ्मये अन्यत्र न दृश्यते।[4] तस्यानुसारं 'शृङ्गार'शब्दः सामान्य-'स्त्रीपुंसयोग'[5] इति शृङ्गारो नास्ति। यथा हि कोशे 'शृङ्ग' शिखर (परमोन्नततमं) अर्थः[6] 'शृङ्गं प्रभुत्वं शिखरे चिह्ने क्रीडाम्बुयन्त्रके। विषाणोत्कर्षयोश्चाथ शृङ्गं कूर्चकशीर्षके॥......... इति मेदिनी॥[7]

भोजराजमते यदा भावः परमुन्नतिं (तादात्म्यं) प्राप्नोति। तदा स सामान्यभाव

---

1. काव्याद.2.1,3
2. काव्याद.2.1, 3
3. शृ.प्र. 11, पृ.सं.- 624
4. शृङ्गारस्यास्य यादृग् वै प्रकाशो दृश्यतेऽ सः। साहित्यशास्त्रे कुत्रापि नान्यत्र खलु दृश्यते॥ शृ.प्र., भोजराजसंस्तवः, पृ.सं. 26
5. यः स्त्रीपुरुषसंयोगो रतिसम्भोगकारकः। स शृङ्गार इति ज्ञेयः ....... ॥ ना.शा. 24.97
6. 'अद्रेः शृङ्गं हरति पवनः ..........॥ मेघ. 1.14
7. 'कूटोऽस्त्री शिखरं शृङ्गम्'। अमरको0 02.03.04, पृ. सं.- 125

एव शृङ्गं (शिखरं) गच्छन् 'शृङ्गार' इति कथ्यते। अन्याचार्याः रतिरेव शृङ्गं (उच्चशिखरं/पराकोटिं) गन्तुं शक्नोतीति विचिन्त्य 'स्त्री-पुरुष' संयोगरूपरत्याः कृते एव शृङ्गारशब्दस्य प्रयोगं कुर्वन्ति। किन्तु भोजराजः अनन्तभावेषु एकोनपञ्चाशद्भावान् चीत्वा सर्वेभ्यो भावेभ्यो शृङ्गारशब्दस्य प्रयोगं करोति। अर्थात् ये ये भावाः परमान्तपर्यन्तं (शृङ्गं) गच्छन्ति ते ते भावा एव शृङ्गार इति भावः।[1]

भावः जीवस्य स्वाभाविको गुणः[2], कोऽपि नैव भावशून्यो भवति। जीवः योगाभ्यासादिना भावशून्यो भूत्वा समाधिमधिगच्छति। भावशून्यजनस्य कृते 'परमहंस' इति शब्दस्य प्रयोगो भवतीति। अतएव कथयितुं शक्यते यद् भोजराजमते तत्रैव रसावियोगो भवति यत्र वक्रोक्ति-स्वभावोक्ति-रसोक्तीनां चारुसमन्वयो जायते।

* * *

1. सर्वेषामिन्द्रियाणां तु वेगाः शृङ्गमिति श्रुताः। ऋच्छन्ति स्व चिदानन्दमिति शृङ्गारसंज्ञकाः।। शृ.प्र., भोजराजसंस्तवः, पृ.सं. 26
2. 'बुद्धिर्ज्ञानमसम्मोहः क्षमा सत्यं दमः शमः। सुखं दुःखं भवोऽभावो भयं चाभयमेव च।। अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः। भवन्ति भावा भूतानां मत्त एव पृथग्विधाः।। गीता. 10.4,5

UGC - CARE Listed
जनवरी–मार्च, 2021

शोधप्रभा
वर्ष : 46, प्रथमोऽङ्कः

# जैनदर्शने प्रमाणविचारः

प्रो. कुलदीपकुमारः *

नयप्रमाणयोराधारेण जैनन्यायः सुस्थितोऽस्ति। यथोच्यते – **'नयप्रमाणात्मको न्यायः'**[1]। सर्वेषु दर्शनेषु प्रमाणानां विवेचनं न्यायान्तर्गतत्वेन उपलभ्यते। किन्तु जैनन्यायस्य इयं विशेषता यत् प्रमाणविवेचनेन सह नयस्यापि विवेचनं जैनन्याये एव समुपलभ्यते इति। न्यायशास्त्रस्य प्रमुखः विषयः प्रमाणविवेचनमित्यत्र सर्वेषां दार्शनिकानां नास्ति मतभेदः। जैनदर्शनेऽपि प्रमाणविवेचकाः शताधिकाः ग्रन्थाः उपलब्धाः सन्ति।

प्रकृते शोधालेखे जैनन्यायान्तर्गतस्य प्रमाणविवेचनस्य निम्नलिखितविषयाणां प्रतिपादने कश्चन प्रयासः विहितोऽस्ति। यथा–

1. प्रमाणलक्षणम्।
2. प्रमाणभेदाः।
3. प्रमाणविषयाः।
4. प्रमाणफलम्।
5. प्रमाणाभासः।

## 1. प्रमाणलक्षणम्

प्रमाणं दार्शनिकजगतो महत्त्वपूर्णविषयोऽस्ति। मानवः सर्वदा ज्ञानप्राप्त्यर्थं यतते। ज्ञानप्राप्तेर्यत्साधनं तत्प्रमाणमिति सर्वेषां दार्शनिकानामैकमत्यम्। तत्रापि यथार्थानुभवसाधनमेव प्रमाणम्।

न्यायदर्शनमते ज्ञानस्य करणमिन्द्रियार्थसन्निकर्षः। तस्मात् तन्मते इन्द्रियसन्निकर्ष एव प्रमाणम्। मीमांसका ज्ञातृव्यापारमेव प्रमाणं स्वीकुर्वन्ति। यतः तेनैव हि पदार्थानां ज्ञानं भवति। सांख्यदर्शने इन्द्रियवृत्तिरेव प्रमाणं मन्यन्ते। बौद्धाः निर्विकल्पकप्रत्यक्षज्ञानं प्रमाणं स्वीकुर्वन्ति। जरन्नैयायिकजयन्तभट्टाः कारकसाफल्यमेव प्रमाणं मन्यन्ते। चार्वाकाः केवलं

---

* आचार्यः (जैनदर्शनविभागः), श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविश्वविद्यालयः, (केन्द्रीय विश्वविद्यालयः) कुतुबसंस्थानिकक्षेत्रम्, नवदेहली–16, Mo. : 9560250117

1. आचार्यः लघु–अनन्तवीर्यः, प्रमेयरत्नमाला, टिप्पण–2

प्रत्यक्षमेव प्रमाणं मन्यन्ते।

जैनदर्शने तु सम्यक् ज्ञानं प्रमाणमिति स्वीक्रियते। एतदनुसारं ज्ञानमेव ज्ञानस्य निकटतमं साधनम्। मतमिदम् आचार्योमास्वातिभिः प्रतिष्ठापितमिति प्रतीयते। तत्त्वार्थसूत्रग्रन्थे प्रतिपादितं यत् – **'मतिश्रुतावधिमनःपर्ययकेवलानि ज्ञानम्। तत् प्रमाणे आद्ये परोक्षम्। प्रत्यक्षमन्यत्'**[1] इति। तथा च मति-श्रुत-अवधि-मनःपर्यय-केवलज्ञानं चैतानि पञ्चज्ञानानि सन्ति। तत्र आद्यज्ञानद्वयं मनसः सहयोगेन भवतीति परोक्षं प्रमाणम्। अवशिष्टं त्रयं तु ज्ञानम् आत्मनः साहाय्येन भवतीति प्रत्यक्षं तत्।

अन्येऽपि जैनदार्शनिकाः प्रमाणस्य विविधाः परिभाषाः अकुर्वन्। तथापि सर्वासां तात्पर्यं त्वेकमेव। तथाहि-**'प्रमाणं स्वपराभासि ज्ञानं बाधविवर्जितम्'**[2] इति न्यायावतारग्रन्थे प्रमाणस्य लक्षणं प्रतिपादितम्। तत्र स्वावभासि ज्ञानं स्वज्ञानम्। परावभासि ज्ञानं पराभासिज्ञानं यत् पदार्थविषयकम्। संशयविपर्ययानध्यवसायरहितं ज्ञानं बाधविवर्जितम्।

समन्तभद्राचार्येण स्वकीये बृहत्स्वयम्भूस्तोत्रे निरूपितं यत्-**'स्वपरावभासकं यथा प्रमाणं भुवि बुद्धिलक्षणम्'**।[3] अर्थात् यत् ज्ञानं स्वस्य परस्य च ज्ञानं बोधं वा कारयति तद् ज्ञानं प्रमाणम्। यत् ज्ञानं स्वस्य परस्य च ज्ञानं न कारयति तद् ज्ञानं प्रमाणं नैव भवितुमर्हति। प्रमाणं तद् ज्ञानमेव भवितुं शक्नोति, येन स्वस्य ज्ञानेन सह परस्य ज्ञानं भवेत् परस्य ज्ञानेन सह स्वस्य ज्ञानं भवेत्। यथा-**'प्रदीपवत्'**[4]।

एवमेव अष्टशतीग्रन्थे अकलङ्काचार्यैः वर्णितं यत्-**'प्रमाणमविसंवादिज्ञानमनधिगतार्थलक्षणत्वात्'**[5]। अर्थात् अविसंवादि अर्थस्य अनधिगतार्थस्य च ज्ञानम् एव प्रमाणम्। एकवारं ज्ञातवान् पुनः तस्य ज्ञानं करोति, तद् प्रमाणं नास्ति, अज्ञातार्थस्य ज्ञानं प्रमाणम्।

परीक्षामुखसूत्रे आचार्यः माणिक्यनन्दी न्यरूपयत् यथा-**'स्वापूर्वार्थव्यवसायात्मकं ज्ञानं प्रमाणम्'**।[6]

प्रमाणमीमांसाग्रन्थे हेमचन्द्राचार्येणोक्तम्-**'सम्यगर्थनिर्णयः प्रमाणम्'**[7]। अर्थात् पदार्थस्य सम्यक् निर्णयः एव प्रमाणम्। एतेन प्रकारेण जैनदर्शने प्रमाणस्य अनेकाः परिभाषा उपलब्धाः भवन्ति, किन्तु यदा वयमेतासां परिभाषाणामुपरि चिन्तनं कुर्मः तदा प्रतीयते यत् सर्वेषां तात्पर्यम् एकमेव – **यथार्थज्ञानमेव प्रमाणम्** इति।

---

1. आचार्यः उमास्वामी, तत्त्वार्थसूत्रम्, अध्यायः1, सूत्रम् 9,12
2. आचार्यसिद्धसेनः न्यायावतारः , कारिका-1
3. आचार्यसमन्तभद्रः, बृहत्स्वयम्भूस्तोत्रम्
4. आचार्यमाणिक्यनन्दीः, परीक्षामुखसूत्रम्, अध्यायः1, सूत्रम् 13
5. आचार्योऽकलङ्कः अष्टशती, पृ. 174
6. आचार्यमाणिक्यनन्दीः, परीक्षामुखसूत्रम्, अध्यायः1, सूत्रम् 1
7. हेमचन्द्राचार्यः प्रमाणमीमांसा, अध्यायः 1, सूत्रम्-2

## 2. प्रमाणभेदाः

प्रमाणलक्षणमिव प्रमाणसंख्याविषयेऽपि विभिन्नदार्शनिकानां मतैक्यं नास्ति। यथा- चार्वाकदर्शने एकमेव प्रमाणम्-प्रत्यक्षप्रमाणम्। सांख्यदर्शने त्रीणि प्रमाणानि स्वीकृतानि- प्रत्यक्षम्, अनुमानम्, आगमश्चेति। बौद्धदर्शने प्रमाणद्वयमङ्गीकृतम्- प्रत्यक्षम्, अनुमानञ्च। वैशेषिकदर्शनेऽपि प्रमाणद्वयमेव स्वीकृतम्-प्रत्यक्षम्, अनुमानञ्च। न्यायदर्शने चत्वारि प्रमाणानि स्वीकृतानि- प्रत्यक्षम्, अनुमानम्, आगमः, उपमानञ्चेति। मीमांसादर्शने प्रभाकरमते पञ्चप्रमाणानि वर्तन्ते-प्रत्यक्षम्, अनुमानम्, आगमः, उपमानम्, अर्थापत्तिश्चेति। मीमांसादर्शनैव भाट्टमते षड्प्रमाणानि स्वीकृतानि- प्रत्यक्षम्, अनुमानम्, आगमः, उपमानम्, अर्थापत्तिः, अभावश्चेति। पुराणेषु नवप्रमाणानि अङ्गीकृतानि- प्रत्यक्षम्, अनुमानम्, आगमः, उपमानम्, अर्थापत्तिः, अभावः, सम्भवम्, ऐतिह्य, प्रातिभश्चेति।

जैनदर्शानानुसारं प्रमाणं द्विविधम्- प्रत्यक्षं परोक्षञ्चेति। प्रति-उपसर्गपूर्वकात् अक्ष्धातोः प्रत्यक्षशब्दो निष्पन्नः। अस्य जीवः इन्द्रियाणि चेति अर्थद्वयम्। किन्तु जैनदर्शने अक्षशब्दस्य आत्मा इत्यर्थं स्वीकृत्य व्युत्पत्तिः प्रदर्शिता। तथा हि-**'अक्ष्णोति व्याप्नोति जानातीत्यक्ष आत्मा'**[1] इति।

न्यायदीपिकायां प्रत्यक्षप्रमाणस्य लक्षणम्- 'विशदप्रतिभासं प्रत्यक्षम्'[2] इति निरूपितम्। विशदं स्पष्टम्। तदुक्तं परीक्षामुखसूत्रे- **'प्रतीत्यन्तराव्यवधानेन विशेषवत्तया वा प्रतिभासनं वैशद्यम्'**[3] इति। किञ्चोक्तं प्रमाणमीमांसायां यत्-**'प्रमाणान्तरानपेक्ष्येदन्तया प्रतिभासो वा वैशद्यम्'**[4] इति।

इदञ्च प्रत्यक्षप्रमाणं पुनः द्विविधम्। सांव्यावहारिकप्रत्यक्षम्, पारमार्थिकप्रत्यक्षञ्चेति। तत्र सांव्यावहारिकमिन्द्रियप्रत्यक्षम्, पारमार्थिकञ्च अतीन्द्रियप्रत्यक्षम्। तदुक्तं परीक्षामुखसूत्रे यत्- **इन्द्रियानिन्द्रियनिमित्तं देशतः सांव्यावहारिकम्**[5] इति। अस्य पुनः सांव्यावहारिकप्रत्यक्षस्य चत्वारो भेदाः- अवग्रहः, ईहा, अवायः, धारणा चेति। पारमार्थिकप्रत्यक्षस्य विकलं सकलं चेति भेदद्वयम्। तत्र कतिपयविषयानेव यद्विषयीकरोति तत् विकलम्। द्रव्याणां सकलपर्यायविषयकं ज्ञानं सकलपारमार्थिकम्। तत् केवलज्ञानमात्रं भवति। तदुक्तं न्यायदीपिकायां यत्- **'तच्च घातिसङ्घात-निरवशेषघातनसमुन्मीलितं केवलज्ञानमेव'**[6] इति। धवला पुस्तकेऽपि-**'केवलणाणमेयविधं कम्मक्खएण उप्पज्जमाणत्तदो'**-[7]

---

1. सर्वार्थसिद्धिः, 1/2 आचार्यपूज्यपादः
2. आचार्यमाणिक्यनन्दिः परीक्षामुखसूत्रम् 2/3,
   अभिनवधर्मभूषणयतिः, न्यायदीपिका 2/1
3. आचार्यमाणिक्यनन्दिः परीक्षामुखसूत्रम्, 2/4
4. हेमचन्द्राचार्यः, प्रमाणमीमांसा, सूत्र 1/1/14
5. परीक्षामुखसूत्रम्, 2/5
6. न्यायदीपिका, 2/14
7. धवलापुस्तकम्-12, खण्डः 4, भागः 2, सूत्रम्14

इति निरूपितम्। यस्य ज्ञानस्य सर्वाणि द्रव्याणि, तेषां सर्वे पर्यायाः प्रत्यक्षतया विषयाः तत् केवलज्ञानम् इति तस्य अर्थः। अपि चोक्तं तत्त्वार्थसूत्रे यत्-**'सर्वद्रव्यपर्यायेषु केवलस्य'**[1] इति। आचार्यहेमचन्द्रेणापि- तत् सर्वथावरणविलये चेतनस्य स्वरूपाविर्भावो मुख्यं केवलमिति केवलज्ञानं निरूपितम्।

यत् ज्ञानं कतिपयपदार्थान् बोधयति तत् विकलप्रत्यक्षं यथोक्तं तत्र **'कतिपयविषयं विकलम्'**[2] एतस्यापि भेदद्वयमस्ति यथा- अवधिज्ञानं मनःपर्ययज्ञानञ्चेति[3]- **'तत्रावधि ज्ञानावरणक्षयोप- शमाद्वीर्यान्तरायक्षयोपशमसहकृताज्जातं रूपिद्रव्यमात्रविषयमवधि ज्ञानम्'**[4] अर्थात् अवधिज्ञानावरणस्य वीर्यान्तरायकर्मणः च क्षयोपशमात् उत्पद्यमानं मूर्त्तिकपदार्थं यत् विषयीकरोति तदवधिज्ञानम्। मनःपर्ययज्ञानावरणस्य वीर्यान्तरायकर्मणः च क्षयोपशमात् उत्पद्यमानं परमनोगतार्थान् यद् विषयीकरोति तत् मनःपर्ययज्ञानम्। यथोक्तम्-

**'मनःपर्ययज्ञानावरणवीर्यान्तरायक्षयोपशमसमुत्थं परमनोगतार्थविषयं मनःपर्यायज्ञानम्।'**[5]

एवं प्रत्यक्षप्रमाणं निरूपितम्। इतश्च परोक्षप्रमाणं निरूप्यते। अविशदं ज्ञानं परोक्षप्रमाणं भवति।[6] अस्य परोक्षज्ञानस्य पञ्चभेदाः सन्ति- स्मृतिः प्रत्यभिज्ञानं तर्कः, अनुमानमागमश्चेति। यथोक्तम्-**'प्रत्यक्षादिनिमित्तं स्मृतिप्रत्ययभिज्ञानतर्कानुमानागम-भेदम्'।**[7]

तेषां सर्वदा काचित् सापेक्षता वर्तते। यथा स्मृतिं प्रति प्राक्तनानुभवः कारणं, प्रत्यभिज्ञानं प्रति स्मृतिः अनुभवश्च, तर्कं प्रति अनुभवस्मृतिप्रत्यभिज्ञानानि, अनुमानं प्रति लिंगदर्शनव्याप्तिग्रहणादि, आगमं प्रति शब्दश्रवणसंकेतग्रहणादि च कारणम्। अतः प्रत्ययान्तरसापेक्षत्वात् एतेषां परोक्षत्वसंज्ञा। प्रत्ययान्तरनिरपेक्षत्वात् च तद् इतरस्य प्रत्यक्षत्वसंज्ञा।[8]

तत्र स्मृतिर्नाम संस्कारप्राकट्यवशात् तदित्याकारकं ज्ञानम्। यथोक्तम्- **'संस्करोद्बोध-निबन्धना तदित्याकारा स्मृतिः'।**[9] संस्कारो नाम धारणाज्ञानम्।

---

1. आचार्योमास्वामी, तत्त्वार्थसूत्रम् 1/29
2. न्यायदीपिका 2/13
3. तदेव
4. तदेव
5. तदेव
6. अविशदप्रतिभासं परोक्षम्। न्यायदीपिका, पृ. 130
7. परीक्षामुखसूत्रम्, 3/2
8. न्यायदीपिका, पृ. 131
9. परीक्षामुखसूत्रम्, 3/3

स्मृतिप्रत्यक्षयोः संकलनात्मकमेव ज्ञानं प्रत्यभिज्ञानं कथ्यते। यथा तदेव इदमित्यादि। यथोक्तम्–'**दर्शनस्मरणकारणकं संकलनं प्रत्यभिज्ञानम्। तदेवेदं, तत्सदृशं, तद्विलक्षणं, तत्प्रतियोगीत्यादि।**'[1] तच्च प्रत्यभिज्ञानं एकत्वप्रत्यभिज्ञानं, सादृश्यप्रत्यभिज्ञानं, वैसादृश्यप्रत्यभिज्ञानं, प्रातियोगिकं प्रत्यभज्ञानञ्चेति चतुर्विधम्। तदुक्तम्–**दर्शनस्मरणसम्भवं तदेवेदं तत्सदृशं तद्विलक्षणं तत्प्रतियोगीत्यादिसंकलनं प्रत्यभिज्ञानमिति।**[2]

व्याप्तिज्ञानं तर्क इति कथ्यते। अस्य ऊहः इत्यपि संज्ञा वर्तते। यथोक्तम्–'**उपलम्भानुपलम्भनिमित्तं व्याप्तिज्ञानमूहः**'।[3] व्याप्तिश्च साध्यसाधनयोः गम्यगमकभावप्रयोजकः सुनिश्चितः सम्बन्धविशेषः। यथा– वह्निधूमयोः सम्बन्धः। सामान्यतया अस्तिपरकं कथनं व्याप्तिः, नास्तिपरकं च अविनाभाव इति व्यवहारः सम्बन्धः।

एतादृशव्याप्तिज्ञानवशात् यत् साध्यज्ञानं भवति तदनुमानम्। यथोक्तम् – '**साधनात्साध्यविज्ञानमनुमानम्**'[4] इति। इदञ्चानुमानं स्वार्थपरार्थभेदेन द्विविधम्। 'तत् द्विधा स्वार्थं परार्थं च'।[5] यत्र स्वयमेव निश्चितात् साधनात् साध्यं जानाति तत्र स्वार्थानुमानं यत्र तु परोपदेशमपेक्ष्य साधनात् साध्यज्ञानं भवति तत् परार्थानुमानम्।

अनुमानस्य अवयवसंख्याविषये दार्शनिकानां मतभेदोऽस्ति। जैनदर्शने अनुमानस्य अवयवद्वयमेव स्वीकृतं प्रतिज्ञा हेतुश्चेति। यद्यपि न्यायदीपिकायां (3/24) तृतीयोऽपि अवयवः धर्मिरूपः स्वीकृतः तथापि तत् धर्मधर्मिभेदविवक्षया कृतमिति ज्ञेयम्। यत्र तु धर्मधर्मिणोः अभेदो विवक्षितः तदा अवयवद्वयमेव स्वीकार्यम्।

अनुमानप्रमाणं बहुसंक्षिप्ततया अत्र निरूपितमस्ति। विशदज्ञानाय आकरग्रन्थाः अवश्यं द्रष्टव्याः।

आप्तवचनात् उत्पद्यमानं ज्ञानमागम इति कथ्यते। यथोक्तम्–'**आप्तवचनादिनिबन्धनमर्थज्ञानमागमः**' इति।[6] आप्तश्च वीतरागः सर्वज्ञः परमहितोपदेशकश्च भवेत्। यथोक्तम्–

**आप्तेनोत्सन्नदोषेण सर्वज्ञेनागमेशिना।**
**भवितव्यं नियोगेन नान्यथा ह्याप्तता भवेत्।।**[7]

---

1. परीक्षामुखसूत्रम्, 3/5
2. प्रमाणमीमांसा
3. परीक्षासूत्रम् 3/7
4. तदेव 3/10
5. प्रमाणमीमांसा 1/2/8
6. परीक्षामुखसूत्रम्, 3/95
7. रत्नकरण्डश्रावकाचार, श्लोकः 5

इदानीं रेखाचित्रमाध्यमेन उपस्थाप्यते। यथा-

### 3. प्रमाणविषयाः

प्रमाणस्य विषयः सामान्यविशेषात्मकः पदार्थः। यथोक्तम्- **'प्रमाणविषयो द्रव्यपर्यायात्मकं वस्तु'** इति।[1] सामान्यञ्च द्विविधं तिर्यक्सामान्यमूर्ध्वतासामान्यञ्चेति। अनयोः तिर्यक्सामान्ये द्रव्यानेकत्वं समयस्यैकत्वं भवति, किन्तु ऊर्ध्वतासामान्ये द्रव्यस्यैकत्वं समयस्यानेकत्वं च भवति। विशेषोऽपि द्विविधः पर्यायविशेषः व्यतिरेकविशेषश्चेति।

### 4. प्रमाणफलम्

प्रमाणस्य द्विप्रकारकं फलं भवति साक्षात्फलं परम्पराफलञ्चेति। तत्र प्रमाणस्य साक्षात्फलमज्ञाननिवृत्तिरेव यथोक्तम्-

**प्रमाणस्य फलं साक्षादज्ञानविनिवर्तनम्।**
**केवलस्य सुखापेक्षे शेषस्यादानहानधीः।।**[2]

1. आचार्यहेमचन्द्रः, प्रमाणमीमांसा 1/30
2. सिद्धसेनदिवाकरः, न्यायावतारः, कारिका 28

प्रमाणस्य परम्पराफलञ्च हानोपादानोपेक्षं भवति। यथा– सर्पादिः हेयः रत्नादिः उपादेयः तृणादि उपेक्षणीयञ्च भवति। अतः एतदपेक्षया प्रमाणस्य परम्पराफलमपि त्रिप्रकारकं भवति। इदञ्च प्रमाणस्य फलं क्वचित् प्रमाणात् भिन्नं कथञ्चित् अभिन्नमपि। यथा अज्ञाननिवृत्तिरूपं फलं प्रमाणात् भिन्नम्। एवं प्रमाणफलं निरूपितम्।

**5. प्रमाणाभासः**

यत् प्रमाणं नास्ति किन्तु प्रमाणवत् प्रतीयते सः प्रमाणाभासः। यथा सन्निकर्षः, इन्द्रियाणि, इन्द्रियवृत्तयः, पदार्थः, प्रकाशः, ईश्वरः, वेदः, कारकसाकल्यमित्यादीनां प्रमाणवत् स्वीकारः प्रमाणाभासः।

स च अस्वसंवेदी गृहीतार्थग्राही निर्विकल्पकदर्शनरूपसंशयादिरूपं वा भवति। प्रमाणवत् प्रमाणाभासोऽपि प्रत्यक्षाभास-परोक्षाभासरूपेण द्विविधः। अग्रेऽपि प्रमाणस्य यावन्तः अवान्तरभेदाः तावन्तः एव प्रमाणाभासस्य अपि भेदाः ज्ञेयाः।

इत्थं जैनदर्शने प्रमाणस्य विशदं विवेचनं युक्तियुक्ततया गभीररूपेण च प्रतिपादितमस्ति। आलेखोऽयं केवलं द्वारोद्घाटनप्रयासः। सुधीजनाः आकरग्रन्थेषु प्रमाणार्णवे निमज्य रत्नानि समादातुमर्हन्ति। इति शम्॥

UGC - CARE Listed
जनवरी-मार्च, 2021

शोधप्रभा
वर्ष : 46, प्रथमोऽङ्कः

# वैदिक स्वरभक्ति : प्रातिशाख्य (शिक्षा ग्रन्थों के सन्दर्भ में)

कु. ऋतिका*

## स्वरभक्ति

स्वरभक्ति दो शब्दों के योग से बना है - स्वर एवं भक्ति। स्वरभक्ति का शाब्दिक अर्थ स्वर के द्वारा विभक्त किया हुआ। 'भक्ति' शब्द विभक्त करने इस अर्थ में भज् धातु में 'क्तिन्' प्रत्यय के योग से बनता है। स्वर का तात्पर्य अकारादि वर्णों से है, जबकि भक्ति का तात्पर्य अंश या भाग है। इस प्रकार स्वरभक्ति की व्याख्या दो प्रकार से की जा सकती है-

1. जो भज्य है, वह भक्ति है। इस अर्थ को स्वीकार करके स्वरभक्ति पद के स्वर का अंश अथवा धर्म ही बोध्य है। तैत्तिरीय प्रातिशाख्य में स्वरभक्ति इस शब्द का अर्थ इसी पक्ष में किया गया है।[1]
2. स्वर जो विभाजित किया जाता है, वह स्वरभक्ति पद से कहा जाता है, अर्थात् यहाँ भक्ति पद विभाग अर्थ में प्रयुक्त है।

**'स्वरभक्ति'** शब्द की व्युत्पत्तिपरक व्याख्या तीन प्रकार से की गई है-

1. स्वर-वर्ण के द्वारा भक्ति अर्थात् विभाग या विभक्त करना -**स्वरेण स्वरवर्णेन भक्तिर्विभागः स्वरभक्ति** (भक्तिः = भज विश्राणने)[2]। प्रायः रेफ अथवा लकार के पश्चात् व्यञ्जन आने पर रेफ अथवा लकार के उच्चारण में असुविधा होती है, जिसे दूर करने के लिए कुछ विशेष परिस्थितियों में एक अतिह्रस्व स्वर-वर्ण का आगम कर संयुक्त व्यंजन को दो भागों में विभक्त कर लिया जाता है, जिससे उसका उच्चारण सुकर हो जाता है। यही स्वरभक्ति है। यथा - बर्हिः (वा.सं. 21. 48) = बर् (क्ट) हिः, उपे बल्हाम् (वा.सं. 23.51) = उप बल् (लृ) हाम्।

---

*शोधच्छात्रा, संस्कृत विभाग, दिल्ली विश्वविद्यालय, दिल्ली, Email-id: ritikalikes@gmail.com

1. भज्यते इति भक्ति धर्मः। स्वस्येव च भक्तिर्यस्य स तथोक्तः स्वरधर्मो। भवतीति यावत्। तै.प्रा. 21/15 (वै.भ.)
2. माधवीया धातुवृत्ति चुरादिगण, 176 (भाजयति)।

2. स्वर-वर्ण का भाग अथवा अंश -**स्वरस्य स्वरवर्णस्य भक्तिर्भागोऽवयव एकदेशो वा स्वरभक्तिः** (भक्तिः = भजि भाषार्थः)[1]। एकमात्राकालयुक्त ह्रस्व स्वर-वर्ण का स्वरभक्ति वाला अतिह्रस्व स्वर-वर्ण कुछ भाग अथवा अंश (अर्द्ध, चतुर्थ अथवा अष्टम मात्र) होने से उसे 'स्वरभक्ति' संज्ञा से अभिहित किया जाता है। सोमयार्य ऐसा ही मानते हैं।[2]
3. स्वर-वर्ण के समान भक्ति अर्थात् धर्म वाली -**स्वरस्येव भक्तिर्धर्मो यस्याः सा स्वरभक्तिः** (भक्तिः = भज् सेवायाम् भज्यत इति)[3]। संयुक्त व्यंजन के मध्यम उच्चरित यह अतिह्रस्व स्वर, स्वर-वर्ण के समान धर्मवाला होने से स्वरभक्तिसंज्ञक होता है। गार्ग्य गोपालयज्वा ने ऐसा ही स्वीकार किया है।[4]

**स्वरभक्ति के स्थल**

स्वरभक्ति कहाँ-कहाँ होती है, इस विषय में पर्याप्त मतभेद है -

1. **याज्ञवल्क्य शिक्षा** के अनुसार रेफ तथा लकार के बाद में ऐसे ऊष्म (श, ष, स तथा ह) हों, जिनके परे स्वर-वर्ण हों तो (रेफ तथा ऊष्म के मध्य) स्वरभक्ति होती है।[5] स्वरभक्ति के परिणाम स्वरूप रेफ तथा लकार का उच्चारण एकारसहित (रे तथा ले के रूप में) होता है।[6] यथा - दर्शतम् (वा.सं. 38.17) = दरेशतम्; शतवंल्शः (वा.सं. 5.43) = शतवंलेशः। रेफ तथा लकार से सम्बद्ध स्वरभक्ति और रेफ एवं लकार के एकार सहित उच्चारण का विधान **केशवीशिक्षा**[7] **लघु माध्यन्दिनीयशिक्षा**[8], **स्वरभक्तिलक्षणशिक्षा**[9] तथा **वर्णरत्नप्रदीपिकाशिक्षा**[10] में भी किया गया है।

---

1. सैव, चुरादिगण, 195 (भनक्ति)।
2. 'तैत्तिरीय-प्रातिशाख्य', 21, 15 पर 'त्रिभाष्यरत्न' : स्वस्य भक्तिः स्वरभक्तिः। योऽस्य रेफस्य समानकरणः स्वरः तद्भक्तिः स्यात्। ऋकारश्चास्य जिह्वाग्रकरणत्वेन रश्रुत्या च समानधर्मः। भक्तिः अवयवः एकदेश इति यावत्।
3. माधवीया धातुवृत्ति, भ्वादिगण, 720 (भजति)।
4. 'तैत्तिरीय-प्रातिशाख्य', 21, 15 पर 'वैदिकाभरण' : भज्यत इति भक्तिः धर्मः। स्वरस्येव भक्तिर्यस्य स तथोक्तः स्वरधर्मो भवतीति यावत्।
5. याज्ञवल्क्यशिक्षा (सं. अमरनाथशास्त्री, काशी, वैक्रमाब्द 2019), वर्णप्रकरण, 17 कः रलाभ्यां पर ऊष्माणो यत्र स्युः स्वरितोदयाः (स्वरोदयाः)। स्वरभक्तिरसौ ज्ञेया पूर्वमाक्रम्य पाठ्यते।।
6. सैव, वर्णप्रकाशः 19; लघुमाध्यन्दिनीया-शिक्षा, 10; 18: ऋकारः खलु सर्वत्र ह्येकार सदृशो भवेत्।
7. पद्यम् 4 (शिक्षासंग्रहः, सं. रामप्रसादत्रिपाठी, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः, वाराणसी, 1919)।
8. पद्यम् 10, 11, 28 (शिक्षासंग्रहः, पृ. 93-95)।
9. पद्यम् 18 शिक्षासंग्रहः, पृ. 93-95)।
10. पद्यम् 52-55 (शिक्षासंग्रहः, पृ. 100)।

2. **वाजसनेयि प्रातिशाख्य** में स्वरभक्ति शब्द के प्रयोग के बिना ही तद्विषयक नियम का प्रतिपादन करते हुए कहा गया है कि बाद में स्वरपरक ऊष्म-वर्ण होने पर रेफ तथा लकार सर्वत्र (क्रमशः) ऋ-वर्ण तथा लृ-वर्ण (के सदृश) ध्वनियों से व्यवहित हो जाते हैं।[1]
3. **आचार्य शौनक** के अनुसार स्वरपूर्व तथा व्यञ्जनपरक रेफ के बाद में ऋ-वर्णात्मक स्वरभक्ति उत्पन्न होती है।[2] यथा - यद्द्य कर्हि कर्हि चित् (ऋ. 8.73.5) में प्रयुक्त कर्हि पद का उच्चारण होगा कर् (ऋ) हि; अर्चन्त्यर्कमर्किण: (ऋ. 01. 10.1) का उच्चारण होगा अर (ऋ) चंन्त्यर (ऋ) कमर् (ऋ) किणः। यद्यपि आचार्य शौनक ने रेफ के बाद में ही स्वरभक्ति का विधान किया है, यह विधान नहीं किया कि लकार के बाद भी स्वरभक्ति का आगम होता है तथापि भाष्यकार उव्वट ने ऋक्प्रातिशाख्य 6.52 के अपने भाष्य में जल्ह्वः पद को स्वरभक्ति के उदाहरण के रूप में प्रस्तुत किया है और 1.32 के भाष्य में स्पष्टतः कहा है कि स्वरभक्ति रेफ अथवा लकार से सम्बद्ध होती है; रेफ के बाद वाली स्वरभक्ति रेफ सदृश होती है तथा लकार के बाद वाली लकार सदृश।[3] इस प्रकार शतवंल्शः (ऋ. 3.8.11) तथा जल्ह्वः (ऋ. 8.61.11) के उच्चारण में स्वरभक्ति लकार के सदृश अर्थात् लृवर्णरूपा होगी। भाष्यकार उव्वट का लकार के बाद में स्वरभक्ति की सत्ता मानना सर्वथा संगत प्रतीत होती है, क्योंकि रेफ तथा लकार का घनिष्ठ सम्बन्ध है; अतः एक के विषय में विहित नियम दूसरे पर भी लागू होता है।[4]
4. **आचार्य शौनक** के मत में सघोष अभिनिधान (विच्छेद) के बाद में भी स्वरभक्ति उत्पन्न होती है[5], यदि बाद में स्पर्श अथवा ऊष्म वर्ण हो। यथा - अर्वाग् देवाः (ऋ. 10.129.6) में सघोष अभिनिहित[6] गकार के बाद में स्वरभक्ति की उत्पत्ति होती है।
5. **आचार्य गार्ग्य** के मत में यम के बाद में नासिक्या (नासिका स्थान वाली) स्वरभक्ति होती है।[7] यथा -**पलिक्नीरित्** (ऋ. 5.2.4); **परिज्मानमिव** (ऋ. 1.127.2)।

---

1. 4.17 : रलावृलृवर्णाभ्यामूष्मणि स्वरोदये सर्वत्र।
2. ऋक्प्रातिशाख्य, 6.46 : रेफात्स्वरोपहिताद्व्यञ्जनोदयादृकारवर्णा स्वरभक्तिरुत्तरा।
3. सा स्वरभक्तिः पूर्वं रेफं लकारं वा भजते। रेफादुत्तरा रेफसदृशी भवति लकारादुत्तरा लकारसदृशी भवति।
4. वर्मा, वीरेन्द्रकुमारः, ऋग्वेद-प्रातिशाख्य (एकं परिशीलनम्), काशी-हिन्दू-विश्वविद्यालयः 1972, पृ. 69-70
5. ऋक्प्रातिशाख्य, 6.47 : विच्छेदात्स्पर्शोष्मपराच्च घोषिणः।
6. तदेव, 6.17 : अभिनिधानं कृतसंहितानां स्पर्शान्तस्थानामपवाद्य रेफम्।
संधारणं संवरणं श्रुतिश्च स्पर्शोदयानाम्।।
7. तदेव, 6.36 : यमान्नासिक्या स्वरभक्तिरुतरा गार्ग्यस्य।

यहाँ ककार तथा जकार अपने-अपने यमों (नासिक्यवर्णों क्ँ, जँ्) को प्राप्त हो जाते हैं[1], जिनके बाद में नासिक्या स्वरभक्ति का आगम होता है।

6. **कुछ आचार्य** रेफपूर्व स्वरभक्ति की ही सत्ता मानते हैं[2], अर्थात् रेफ के बाद में ही स्वरभक्ति का आगम स्वीकार करते हैं, अन्यत्र नहीं। यथा – कर्हि (ऋ. 8.73.5) = कर् (ऋ) हि। तैत्तिरीय प्रातिशाख्य के अनुसार भी रेफ तथा ऊष्म का संयोग होने पर रेफ-स्वरभक्ति होती है[3], और यह सोमयार्य की व्याख्या के अनुसार करण (जिह्वाग्र) तथा श्रुति की समानता के कारण ऋकार के रेफ का समान धर्म होने से ऋकारावयवरूपा होती है।[4] शौनकीया चतुरध्यायिका में भी रेफ के बाद में स्वरपरक ऊष्मवर्ण होने पर अकार के अर्द्धभागसदृश अथवा कतिपय आचार्यों के मत में चतुर्थभाग सदृश स्वरभक्ति का विधान किया गया है।[5] यथा – अर्यमा, पर्व।

7. **कतिपय आचार्यों** के मत में अक्रान्त (अद्विरुक्त) ऊष्मवर्ण बाद में होने पर स्वरभक्ति की सत्ता होती है[6], अर्थात् अद्विरुक्त ऊष्मवर्ण परे होने पर रेफ तथा लकार के बाद में स्वरभक्ति होती है। यथा –**वर्षम्** (ऋ. 5.57.8); **कर्हि** (ऋ. 8.73.5); **अदर्शि** (ऋ. 1.46.11); **जल्हवः** (ऋ. 8.61.11)। इन आचार्यों के अनुसार **वर्ष्यान्** (ऋ. (5.83.3) तथा **अदर्शयती** (ऋ. 7.81.1) आदि में द्विरुक्त ऊष्मवर्ण (षकार तथा शकार) होने से स्वरभक्ति नहीं होती।

7. कुछ आचार्य सर्वत्र स्वरभक्ति का अभाव मानते हैं।[7] यथा –**वर्ष्यान्** (ऋ. 5.83. 3); **अग्निर्हुत्यम्** (10.80.3); **अर्वाग् देवाः** (ऋ. 10.129.6)।

## स्वरभक्ति के भेद

ऋक्प्रातिशाख्य के अनुसार स्वरभक्ति दो प्रकार की होती है – दीर्घ तथा ह्रस्व। ऊष्मवर्ण बाद में होने पर स्वरभक्ति दीर्घ होती है।[8] यथा –**कर्हि** (ऋ. 8.73.5); **अदर्शि** (ऋ. 1.46.11); **जल्हवः** (ऋ. 8.61.11); **शतवल्शः** (ऋ. 3.8.11); यहाँ

---

1. तदेव, 6.29 : स्पर्शा यमाननुनासिकाः स्वान्परेषु स्पर्शेष्वनुनासिकेषु।
2. तदेव, 6.51 : रेफोपधामपरे विद्यमानाम्।
3. तैत्तिरीय-प्रातिशाख्य, 21.15 : रेफादूष्मसंयोगे रेफस्वरभक्तिः।
4. तदेव, 21.16 पर 'त्रिभाष्यरत्न' : ऋकारश्चास्य जिह्वाग्रकरणत्वेन श्रुत्या च समान धर्मः। एतदुक्तं भवति-ऋकारस्यावयवो भवतीत्यर्थः।
5. शौनकीयाचतुरध्यायिका, 1.101 : रेफादूष्मणि स्वरपरे स्वरभक्तिरकारस्यार्धं चतुर्थमित्येके।
6. ऋक्प्रातिशाख्य, 6.52 : अक्रान्तोष्मप्रत्ययाभावमेके।
7. तदेव, 6.50 : सर्वत्रैके स्वरभक्तेरभावम्।
8. तदेव, 6.48 : द्राघीयसी तूष्मपरा।

